# अथ रामाश्वमेधस्थविषयानुक्रमणिका—

रा०मे० ॥ १ ॥



अन० ॥ १

॥ इति विषयानुक्रमणिका संपूर्णा ॥

# श्रीवाल्मीकीयरामायणम् ।

## ( भूषण-तनिश्लोकी-रामानुजीयव्याख्यासमेतम् )

तनिश्लोक्याख्यया भूषणाख्यया रामानुजीयाख्यया च व्याख्यया समेतं श्रीवाल्मीकीयरामायणम् अत्युत्तमतैलङ्गदेशीयपुस्तकमालोच्य पण्डितैः संशोधितं, तच्च सम्प्रति सुव्यक्तैः स्थूलसूक्ष्माक्षरैर्लक्ष्मीवेङ्कटेश्वरमुद्रणयन्त्रे मुद्र्यते, तस्य च नागेशप्रभृतिविनिर्मिताः सन्ति यद्यपि बह्व्यो व्याख्याः, तथापि सहृदयहृदयाह्लादकनानाविधाऽपूर्वार्थान्वेषणे प्रयतमानैरार्यकुलोचितधर्ममर्यादाविचारशीलैर्महाशयैर्निर्विशेषत्वेन सविशेषत्वेन च ब्रह्मस्वरूपप्रतिपादकवेदान्तवाक्यानां समीचीनतर्कसहकृतविषयभेदव्यवस्थापनेन तात्पर्यार्थनिर्णायकतया श्रीवाल्मीक्यभिप्रायानुगा रामानुजीयव्याख्यातनिश्लोकीव्याख्यासमेता भूषणाख्यव्याख्याऽवश्यं संग्रहोचितास्ति, प्रथमं जिघृक्षूणां मूल्यं २५ रूप्यकमात्रं, ततोऽग्रे वर्द्धयिष्यते युद्धकाण्डान्तं मुद्रितमस्ति समग्रं च शीघ्रमेव भविष्यति ।

## विष्णुसहस्रनाम ।

### ( निरुक्ति-निर्वचन-भगवद्गुणदर्पणभाष्यसहित. )

अनुष्टुप्श्लोकात्मक निरुक्ति व्याख्यासमेत और प्रकृतिप्रत्यय को दिखानेवाले पाणिनिसूत्रों से गर्भित ऐसी निर्वचन नामक द्वितीय व्याख्या से युक्त भगवद्गुणदर्पण नामक विष्णुसहस्रनाम भाष्य संपूर्ण छपके तय्यार है. की० ५ रु. और उक्त भाष्य के अनुसार विष्णुसहस्रनाम का व्युत्पत्तिसहित हिंदीभाषा में दीपिका नामक ग्रंथ ( कीमत रु० १ ) तथा शाङ्करभाष्य के अनुकूल विष्णुसहस्रनाम का व्युत्पत्तिसहित हिंदीभाषा में चन्द्रिका नामक ग्रन्थ ( कीमत १२ आ० ) सो ये दोनों पुस्तकें अत्यंत सुंदर छोटे बडे अक्षरों में छपकर विक्रयार्थ प्रस्तुत हैं जिन महाशयों को लेने की इच्छा हो वे शीघ्र सूचना करें.

पुस्तक मिलनेका ठिकाना-गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" छापाखाना, कल्याण-मुंबई.

श्रीगणेशाय नमः ॥ ॥ श्रीकुलदेवतायैनमः ॥ ॥ श्रीगुरुचरणारविन्दाभ्यांनमः ॥ ॥
नारायणंनमस्कृत्यनरंचैवनरोत्तमम् ॥ देवींसरस्वतींव्यासंततोजयमुदीरयेत् ॥ १ ॥
व्यासउवाच ॥ ॥ ततःपरंधराधारंपृष्टवान्भुजगेश्वरम् ॥ वात्स्यायनोमुनिवरःकथमेतां
सुनिर्मलाम् ॥ २ ॥ वात्स्यायनउवाच ॥ शेषाशेषकथास्त्वत्तोजगत्सर्गलयादिकाः ॥
भूगोलश्चखगोलश्चज्योतिश्चक्रविनिर्णयः ॥ ३ ॥ महत्तत्त्वादिसृष्टीनांपृथक्तत्त्वविनि
र्णयैः ॥ नानाराजचरित्राणिकथितानित्वयानघ ॥ ४ ॥ सूर्यवंशभवानांचराज्ञांचारि
त्रमद्भुतम् ॥ तत्रानेकमहापापहरारामकृताकथा ॥ ५ ॥ तस्यवीरस्यरामस्यहयमेधक
थाश्रुता ॥ संक्षेपतोमयात्वत्तस्तामिच्छामिसविस्तराम् ॥ ६ ॥ याश्रुतासंस्मृताचोक्ताम
हापातकहारिणी ॥ चिन्तितार्थप्रदात्रीचभक्तचित्तप्रतोषदा ॥ ७ ॥ ॥ शेषउवाच ॥ ॥ ध
न्योसिद्विजवर्यत्वंयस्यतेमतिरीदृशी ॥ रघुवीरपदद्वन्द्वमकरन्दस्पृहावती ॥ ८ ॥ वदन्ति
मुनयःसर्वेसाधूनांसंगमंवरम् ॥ यस्मात्पापक्षयकरारघुनाथकथाभवेत् ॥ ९ ॥ त्वयामेऽनु

ग्रहः सृष्टोयोरामःस्मारितःपुनः ॥ सुरासुरकिरीटोच्चैर्मणिनीराजितांघ्रिकः ॥ १० ॥ रावणारिकथावार्द्धौमशकोमादृशःकियान् ॥ यत्रब्रह्मादयोदेवामोहितानविदन्त्यपि ॥ ११ ॥ तथापिभोमयातुभ्यंवक्तव्यंस्वीयशक्तितः ॥ पक्षिणःस्वगतिंश्रित्वाखेगच्छन्तिसुविस्तरे॥ १२॥चरितंरघुनाथस्यशतकोटिप्रविस्तरम् ॥ येषांवैयादृशीबुद्धिस्तेवदन्त्येवतादृशम् ॥ १३ ॥ रघुनाथसतीकीर्तिर्मद्बुद्धिंनिर्मलीकृताम् ॥ करिष्यतिस्वसंपर्कात्कनकंत्वनलोयथा ॥ १४ ॥ ॥ व्यासउवाच ॥ ॥ इत्युक्त्वातंमुनिवरंध्यानस्तिमितलोचनः ॥ ध्यानेनालोकयांचक्रेकथांलोकोत्तरांशुभाम् ॥ १५ ॥ गद्गदस्वरसंयुक्तोरोमहर्षाङ्कितांङ्गकः॥ कथयामासविशदांकथांदाशरथेःपुनः ॥ १६ ॥ ॥ शेषउवाच ॥ ॥ लङ्केश्वरेविनिहतेदेवदानवदुःखदे ॥ अप्सरोगणवक्त्राब्जचन्द्रमाःकान्तिवर्धनः ॥ १७ ॥ सुराःसर्वेसुखंप्रापुरिन्द्रप्रभृतयस्तदा ॥ सुखंप्राप्ताःस्तुतिंचक्रुर्दासवत्प्रणतिंगताः ॥ १८ ॥ लङ्कायांचप्रतिष्ठाप्यधर्मयुक्तंविभीषणम् ॥ सीतयासहितोरामःपुष्पकंसमुपाश्रितः ॥ १९॥ सुग्री

वहनुमत्सीतालक्ष्मणैः संयुतस्तदा ॥ बिभीषणोपिसचिवैरन्वगाद्विरहोत्सुकः ॥ २० ॥ लङ्कामपश्यद्बहुधाभग्नप्राकारतोरणाम् ॥ दृष्ट्वाऽशोकवनंतत्रसीतास्थानंमुमूर्च्छह ॥ २१ ॥ शिंशपांस्तत्रवृक्षांश्चपुष्पितान्कोरकैर्युतान् ॥ राक्षसीभिःसमाकीर्णान्मृताभिर्हनुमद्भयात् ॥ २२ ॥ इत्थंसर्वंविलोक्याशुरामःप्रायात्पुरींप्रति ॥ ब्रह्मादिदेवैःसहितःस्वीयस्वीयविमानकैः ॥ २३ ॥ देवदुन्दुभिनिर्घोषाञ्छृण्वन्श्रोत्रसुखावहान् ॥ तथैवाप्सरसांनृत्यैःपूज्यमानोरघूत्तमः ॥ २४ ॥ सीतायैदर्शयन्मार्गेतीर्थान्याश्रमवन्तिच ॥ मुनींश्चमुनिपुत्रांश्चमुनिपत्नीःपतिव्रताः ॥ २५ ॥ यत्रयत्रकृतोवासःपूर्वंरामेणधीमता ॥ तान्सर्वान्दर्शयामासलक्ष्मणेनसमन्वितः ॥ २६ ॥ इत्येवंदर्शयंस्तस्यैरामोद्राक्षीत्स्वकांपुरीम् ॥ तस्याःपुनःसमीपेतुनन्दिग्रामंददर्शह ॥ २७ ॥ यत्रवैभरतोराजापालयन्धर्ममास्थितः ॥ भ्रातुर्वियोगजनितंदुःखचिह्नंवहन्बहु ॥ २८ ॥ गर्तशायीब्रह्मचारीजटावल्कलसंयुतः ॥ कृशाङ्गयष्टिर्दुःखार्तःकुर्वन्रामकथांमुहुः ॥ २९ ॥ यवान्नमपिनोभुङ्क्तेजलंपिबतिनोमुहुः ॥ उ

घ्नन्तंसवितारंयोनमस्कृत्यब्रवीतिच ॥ ३० ॥ जगन्नेत्रसुरस्वामिन्हरसेदुष्कृतंमहत् ॥ मद
र्थेरामचन्द्रोपिजगत्पूज्योवनंययौ ॥ ३१ ॥ सीतयासुकुमाराङ्ग्यासेव्यमानोऽटवींगतः ॥
यासीतापुष्पपर्यङ्केसुखंसुष्वापदुःखिता ॥ ३२ ॥ यासीतारविसंतापंकदापिप्रापनोस
ती ॥ मदर्थंजानकीसाचप्राप्तारण्यंभ्रमत्यहो ॥ ३३ ॥ यासीताराजवृन्दैश्चनदृष्टावाकदा
चन ॥ सासीतादृश्यतेनूनंकिरातैःकालरूपिभिः ॥ ३४ ॥ यासीतामधुरंत्वन्नंभोजिता
नबुभुक्षिता ॥ सासीताद्यवनस्थानिफलानिप्रार्थयत्यहो ॥ ३५ ॥ इत्येवमन्वहंसूर्यमुप
स्थायवदत्यदः ॥ प्रातःप्रातर्महाराजोभरतोरामवल्लभः ॥ ३६ ॥ यश्चोच्यमानःसचिवैः
समदुःखसुखैर्बुधः ॥ नीतिज्ञैःशास्त्रनिपुणैरितिप्रोवाचतान्नृपः ॥ ३७ ॥ अमात्यादुर्भगं
मांकिंप्रब्रूतपुरुषाधमं ॥ मदर्थेमेऽग्रजोरामोवनंप्राप्यावसीदति ॥ ३८ ॥ दुर्भगस्यममप्रस्वाः
पापमार्जनमादरात् ॥ करोमिरामचन्द्रंचस्मारंस्मारंसुमन्त्रिणः ॥ ३९ ॥ धन्यासुमित्रासु
तरांवीरसूःस्वपतिप्रिया ॥ यस्यास्तनूजोरामस्यचरणौसेवतेऽन्वहम् ॥ ४० ॥ यत्रग्रामे

स्थितोनूनंभरतोभ्रातृवत्सलः ॥ विलापंप्रकरोत्युच्चैस्तंग्रामंसंददर्शह ॥ ४१ ॥ ॥ इति श्री
पद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेशमाश्वमेधेप्रथमोऽध्यायः ॥ १ ॥ ॥ ॥
शेषउवाच ॥ ॥ अथतद्दर्शनोत्कण्ठाविकलीकृतचेतसा ॥ पुनःपुनःस्मृतोभ्राताभरतोधा
र्मिकाग्रणीः ॥ १ ॥ उवाचचहनूमन्तंबलवन्तंसमीरजम् ॥ प्रस्फुरद्दशनव्याजचक्रकान्तिह
तान्धकम् ॥ २ ॥ शृणुवीरहनूमंस्त्वंमद्गिरंभ्रातृनोदिताम् ॥ चिरंतनवियोगेनगद्गदीकृतवि
ह्वलाम् ॥ ३ ॥ गच्छत्वंभ्रातरंवीरंसमीरस्यतनूद्भव ॥ मद्वियोगकृशांयष्टिंवपुषोबिभ्रतंहठा
त् ॥ ४ ॥ योवल्कलंपरीधत्तेजटांधत्तेशिरोरुहैः ॥ फलानांभक्षणमपिनकुर्याद्विरहातुरः ॥
॥ ५ ॥ परस्त्रीयस्यमातेवलोष्ठवत्काञ्चनंपुनः ॥ प्रजाःपुत्रानिवोद्वीक्षेद्बान्धवोममधर्मवित्
॥ ६ ॥ मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम् ॥ मदागमनसंदेशपयोवृष्ट्याशुसिञ्चतम्
॥ ७ ॥ सीतयासहितंरामंलक्ष्मणेनसमन्वितम् ॥ सुग्रीवादिकपीन्द्रैश्चरक्षोभिःसबिभीषणैः
॥ ८ ॥ प्राप्तंनिवेदयसुखात्पुष्पकासनसंस्थितम् ॥ येनमेह्यनुजःशीघ्रंसुखमेतिमदागमात्

॥ ९ ॥ इतिश्रुत्वाततोवाक्यंरघुवीरस्यधीमतः ॥ जगामभरतावासंनन्दिग्रामंनिदेशकृत्

॥ ३ ॥ ॥ १० ॥ गत्वासनन्दिग्रामंतुमन्त्रिवृद्धैःसुसंयुतम् ॥ भरतंभ्रातृविरहक्लिन्नंधीमान्ददर्शह ॥

॥ ११ ॥ कथयन्तंमंत्रिवृद्धान्रामचंद्रकथानकं ॥ तदीयपदपाथोभूमकरंदसुनिर्भरः ॥ १२ ॥

नमश्चकारभरतंधर्ममूर्तियुतंकिल ॥ विधात्रासकलांशेनसत्वेनैवविनिर्मितम् ॥ १३ ॥ तं

दृष्ट्वाभरतःशीघ्रंप्रत्युत्थायकृताननतिम् ॥ स्वागतंचेतिहोवाचरामस्यकुशलंवद ॥ १४ ॥

इत्येवंवदतस्तस्यभुजोदक्षिणतोऽस्फुरत् ॥ हृदयाच्चगतःशोकोहर्षास्रैःपूरिताननः ॥

॥ १५ ॥ विलोक्यतादृशंभूपंप्रत्युवाचकपीश्वरः ॥ निकटेहिपुरःप्राप्तंविद्धिरामंसलक्ष्म

णम् ॥ १६ ॥ रामागमनसंदेशामृतसिक्तकलेवरः ॥ प्रापयद्धर्षपूरंहिसहस्रास्योनवेद्म्यहम् ॥

॥ १७ ॥ जगादममतन्नास्तियत्तुभ्यंदीयतेमया ॥ दासोऽस्मिजन्मपर्यन्तंरामसंदेशहारकः

॥ १८ ॥ वसिष्ठोपिगृहीत्वार्घ्यंमन्त्रिवृन्दाःसुहर्षिताः ॥ जग्मुस्तेरामचन्द्रंचहनुमद्दर्शिता ॥ ३ ॥

ध्वना ॥ १९ ॥ दृष्ट्वादूरात्समायान्तंरामचन्द्रंमनोरमम् ॥ पुष्पकासनमध्यस्थंससीतंसहल

क्ष्मणम् ॥ २० ॥ रामोपिदृष्ट्वाभरतंपादचारेणसङ्गतम् ॥ जटावल्कलकौपीनपरिधानस
मन्वितम् ॥ २१ ॥ अमात्यान्भ्रातृवेषेणसमवेषाञ्जटाधरान् ॥ नित्यंतपःक्लिष्टतयाकृश
रूपान्ददर्शह ॥ २२ ॥ रामोपिचिन्तयामासदृष्ट्वाचैतादृशंनृपम् ॥ अहोदशरथस्यायंराज
राजस्यधीमतः ॥ २३ ॥ पुत्रःपदातिरायातिजटावल्कलवेषभृत् ॥ नदुःखंतादृशंमह्यंव
नमध्यगतायहि ॥ २४ ॥ यादृशंमद्वियोगेनचैतस्यपरिवर्तते ॥ अहोपश्यतमेभ्राताप्राणा
त्प्रियतमः सखा ॥ २५ ॥ श्रुत्वामांनिकटेप्राप्तंमन्त्रिवृद्धैःसुहर्षितैः ॥ द्रष्टुंमांभरतोऽभ्येति
वसिष्ठेनसमन्वितः ॥ २६ ॥ इतिब्रुवन्नरपतिः पुष्पकान्नभसोऽगणात् ॥ बिभीषणहनूम
द्भ्यांलक्ष्मणेनकृतादरः ॥ २७ ॥ यानादवततारांशुविरहाक्लिन्नमानसः ॥ भ्रातर्भ्रातः
पुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः ॥ २८ ॥ दृष्ट्वासमुत्तीर्णमिमंरामचन्द्रंसुरैर्युतम् ॥ भरतोभ्रातृ
विरहक्लिन्नंधीमान्ददर्शह ॥ हर्षाश्रूणिप्रमुञ्चंश्चदण्डवत्प्रणनामह ॥ २९ ॥ रघुनाथोपितंदृ
ष्ट्वादण्डवत्पतितंभुवि ॥ उत्थाप्यजगृहेदोर्भ्यांहर्षालोकसमन्वितः ॥ ३० ॥ उत्थापितोपि

हिभृशंनोदतिष्ठद्रुदन्मुहुः ॥ रामचन्द्रपदाम्भोजग्रहणासक्तबाहुभृत् ॥ ३१ ॥ भरतउवाच ॥ दुराचारंचदुष्टंमांपतितंत्वंकृपांकुरु ॥ रामचन्द्रमहाबाहोकरुणंकरुणानिधे ॥ ३२ ॥ यस्ते विदेहज्यापाणिस्पर्शंक्रूरममन्यत ॥ सएवचरणोरामवनेबभ्राममत्कृते ॥ ३३ ॥ इत्युक्त्वा श्रुमुखोदीनः परिरभ्यपुनः पुनः ॥ प्राञ्जलिः पुरतस्तस्थौहर्षविह्वलिताननः ॥ ३४ ॥ रघुना थस्तमनुजंपरिष्वज्यकृपानिधिः ॥ प्रणम्यचमहामन्त्रीमुख्यानापृच्छ्यसादरम् ॥ ३५ ॥ भरतेनसमंभ्रात्रापुष्पकासनमास्थितः ॥ सीतांददर्शभरतोभ्रातृपत्नीमनिंदिताम् ॥ ३६ ॥ अनुसूयामिवात्रेःकिंलोपामुद्रांघटोद्भवः ॥ पतिव्रतांजनकजाममन्यतननामच ॥ ३७ ॥ मातःक्षमस्वमदघंमायादुर्वृत्तकारकम् ॥ त्वत्सदृश्यःपतिपराःसर्वेषांसाधुकारकाः ॥ ३८ ॥ जानक्यपिमहाभागादेवरंवीक्ष्यसादरम् ॥ आशीर्भिरभियुंज्याथसमपृच्छदनामयम् ॥ ३९ ॥ विमानवरमारूढास्तेसर्वेनभसोऽङ्गणे ॥ क्षणादालोकयांचक्रेनिकटेस्वपितुःपु रीम् ॥ ४० ॥ इति श्रीपद्मपुराणेपातालखण्डेरामाश्वमेधीयेशेषवात्स्यायनसंवादेद्विती०२

॥ शेषउवाच ॥ ॥ दृष्ट्वारामोराजधानींनिजलोकनिवासिनीम् ॥ जहर्षमतिमान्वीरश्चिर
दर्शनलालसः ॥ १ ॥ भरतोपिस्वकंमित्रंसुमुखंनगरंप्रति ॥ प्रेषयामाससचिवंनगरोत्स
वसिद्धये ॥ २ ॥ ॥ भरतउवाच ॥ ॥ कुर्वन्तुलोकास्त्वरितंरघुनाथागमोत्सवम् ॥ मन्दिरेम
न्दिरेरथ्यांकृतकौतुकचित्रकाम् ॥ ३ ॥ विपांसुकाराजमार्गाश्चन्दनद्रवसिञ्चिताः ॥ प्रसूनभ
रसंकुप्ताहृष्टपुष्टजनावृताः ॥ ४ ॥ विचित्रवर्णध्वजभाचित्रिताखिलखांगणम् ॥ मेघा
गमेधनुरिवपश्यंत्वेतेवलीमुखाः ॥ ५ ॥ प्रतिगेहंतुलोकानांकारयंत्वगरूक्षणम् ॥ यद्धूम
वीक्ष्यशिखिनोनृत्यंकुर्वन्तुलीलया ॥ ६ ॥ हस्तिनोममशैलाभानाधोरणसुयंत्रितान् ॥
विचित्रयंतुबहुशोगैरिकाद्युपधातुभिः ॥ ७ ॥ वाजिनश्चित्रिताभूयःसुशोभंतुमनोजवाः ॥
यद्वेगवीक्षणादेवगर्वंत्यजतिस्वर्हयः ॥ ८ ॥ कन्याःसहस्रशोरम्याःसर्वाभरणभूषिताः ॥
गजोपरिसमारूढामुक्ताभिर्विकिरंतुच ॥ ९ ॥ ब्राह्मण्यःपात्रहस्ताश्चदूर्वाहारिद्रसंयुताः ॥
सुवासिन्योमहाराजंरामंनीराजयंतुताः ॥ १० ॥ कौसल्यापुत्रसंयोगसंदेशविधुरासती ॥

हर्षंप्रापोत्कुशितातंवीक्ष्यसुखलालसा ॥ ११ ॥ इत्येवमादिरचनाः पुरशोभाविधायकाः ॥ करोतु जनताहृष्टारामस्यागमनंप्रति ॥ १२ ॥ ॥शेषउवाच ॥ ॥ इतिश्रुत्वाततो वाक्यंसुमुखोमन्त्रवित्तमः ॥ प्रययौनगरींकर्तुंकृतकौतुकतोरणाम् ॥ १३ ॥ गत्वाथनगरींतांवैमन्त्रीतुसुमुखाभिधः ॥ ख्यापयामासलोकानांरामागममहोत्सवम् ॥ १४ ॥ लोकाः श्रुत्वापुरींप्राप्तंरघुनाथंसुहर्षिताः ॥ पूर्वंतदीयविरहत्यक्तभोगसुखाहराः ॥ १५ ॥ ब्राह्मणावेदसंपन्नाः पवित्राधर्मपाणयः ॥ धौतोत्तरीयरचिताजग्मुः श्रीरघुनायकम् ॥ १६ ॥ क्षत्रियायेशूरतमाधनुर्बाणधरावराः ॥ संग्रामेबहुशोवीराजेतारोययुरप्यमूम् ॥ १७ ॥ वैश्याधनसमृद्धाश्चमुद्राशोभितपाणयः ॥ शुभ्रवस्त्रपरीधानाअभिजग्मुः पुरंप्रति ॥ १८ ॥ शूद्राद्विजेषुयेभक्ताः स्वीयाचारसुनिष्ठिताः ॥ वेदाचाररतायेवाअभिजग्मुः पुरंप्रति ॥ ॥ १९ ॥ येथवृत्तिकरालोकाः स्वेस्वेकर्मण्यनुष्ठिताः ॥ स्वकंवस्तुसमादायययुः श्रीरामभूषितम् ॥ २० ॥ इत्थंभूपतिसंदेशात्प्रमोदप्लवसंयुताः ॥ नानाकौतुकसंयुक्ताआजग्मु

र्मनुजेश्वरम् ॥ २१ ॥ ॥ शेषउवाच ॥ ॥ रघुनाथोपिसकलैर्दैवतैः स्वस्वयानगैः ॥परी
तःप्रविवेशोच्चैःपुरींरचितमोहनाम्॥२२॥प्लवङ्गाःप्लवनैर्युक्ताआकाशपथचारिणः॥स्वस्व
शोभापरीताङ्गाश्चानुजग्मुः पुरोत्तमम्॥२३॥ पुष्पकादवरुह्याशुनरयानमथारुहत्॥ सीत
यासहितोरामःपरिवारपरिवृतः॥ २४ ॥ अयोध्यांप्रविवेशाथकृतकौतुकतोरणाम्॥ हृष्टपु
ष्टजनाकीर्णामुत्सवैः परिभूषिताम् ॥ २५॥ वीणापणवभेर्यादिवादित्रैराहतैर्भृशम्॥शोभ
मानः स्तूयमानः सूतमागधबंदिभिः॥ २६ ॥ जयराघवरामेतिजयसूर्यकुलाङ्गद ॥ ज
यदाशरथेदेवजयताल्लोकनायकः ॥ २७ ॥ इतिशृण्वन्शुभांवाचंपौराणांहर्षतांगताम् ॥
शुभदर्शनसजातपुलकोद्भेदशोभिनाम् ॥ २८ ॥ प्रविवेशवरंमार्गंरथ्याचत्वरभूषितम् ॥
चन्दनोदकसंसिक्तंपुष्पपल्लवसंयुतम् ॥ २९ ॥ तदापौराङ्गनाः काश्चिद्गवाक्षबिलमाश्रि
ताः॥ रघुनाथस्वरूपेक्षाजातकामाअथाब्रुवन् ॥ ३० ॥ धन्याअभूवन्बतभिल्लकन्या
वनेषुयाराममुखारविन्दम्॥स्वलोचनेन्दीवरकैरथापिबन्स्वभाग्यसंजातमहोदयाइमाः॥

॥ ३१ ॥ धन्यंमुखंपश्यतवीरधाम्नः श्रीरामदेवस्यसरोजनेत्रम् ॥ यद्दर्शनंधातृमुखाःसुराअपिप्रापुर्महद्भाग्ययुतावयंत्वहो ॥ ३२ ॥ एतन्मुखंसुखकरंवरचारुहासंकिरीटसंशोभिनिजोत्तमांगम् ॥ बन्धूकधिक्कारलसच्छविप्रदंदन्तच्छदंबिभ्रतमन्धनाशनम् ॥ ३३ ॥ इतिगदितवतीस्ताःस्नेहभारेणरामानलिनदलसदृक्षैर्नेत्रपातैर्निरीक्ष्य ॥ निखिलगुरुरनूनप्रेमभारंनृलोकंजननिगृहमियेषप्रोषितांगेनहृष्टः ॥ ३४ ॥ ॥ इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरामाश्वमेधेरघुनाथस्यपुरप्रवेशोनामतृतीयोऽध्यायः ॥ ३ ॥ ❀ ॥ ॥

॥ वात्स्यायनउवाच ॥ ॥ भुजगाधीश्वरेशानधराधरधरक्षम ॥ शृण्वेकंसंशयंमह्यंकृपयाकथयस्वतम् ॥ १ ॥ रघुनाथस्यगमनंवनंप्रतियदाह्यभूत् ॥ तदाप्रभृतिदेहेनस्थिताशून्येनचेतसा ॥ २ ॥ तद्विप्रयोगविधुराकृशदेहातिदुःखिता ॥ सुमुखान्मान्त्रिणःश्रुत्वारघुनाथंसमागतम् ॥ ३ ॥ कथंजहर्षकिमभूत्कीदृशंतत्र चिह्नितम् ॥ रामचन्द्रस्यसंदेशहर्तारंकिमुवाचसा ॥ ४ ॥ एतन्मेसंशयंछिन्धिरघुनाथगुणोदयम् ॥ यथावच्छृण्वतेमह्यंकथ

यस्वप्रसादतः ॥ ५ ॥ ॥ शेषउवाच ॥ ॥ साधुपृष्टंमहाभागद्विजवर्यपुरस्कृत ॥ तन्मेनिग
दतः साक्षाच्छृणुष्वेकमनाः किल ॥ ६ ॥ यदातद्वदनाम्भोजच्युतंरामागमामृतम् ॥ पीत्वा
पीत्वाबभूवाहोस्थगिताङ्गनाविह्वला ॥ किंमेस्वप्नोविमूढायाः किंवाभ्रमकरंवचः ॥ ७ ॥
ममवैमन्दभाग्यायाः कथंरामेक्षणंपुनः ॥ बहुनातपसाकृत्वाप्राप्तोऽयंचसुतः शिशुः ॥ ८ ॥
केनचिन्ममपापेनविप्रयोगंगतःपुनः ॥ समन्त्रिन्कुशलीरामोसीतालक्ष्मणसंयुतः ॥ ९ ॥
कथंमांस्मरतेवीरो वनचारीसुदुःखिताम् ॥ इतिसाविललापोच्चैरघुनाथस्मृतिंगता ॥
॥ १० ॥ नविवेदनिजंकिंचित्परकीयंविमोहिता ॥ सुमुखोपितथादृष्ट्वादुःखितांमातरंभृ
शम् ॥ ११ ॥ वीजयामासवासोग्रैः संज्ञामापचसापुनः ॥ उवाचजननींसौम्यंवचोहर्ष
करंमुहुः ॥ १२ ॥ रघुनाथंप्रसस्माराद्दृष्टांतांव्यदधात्पुनः ॥ मातर्विद्धिगृहंप्राप्तंरघुनाथंसल
क्ष्मणम् ॥ १३ ॥ सीतयासहितंपश्यचाशीर्भिरभियुङ्क्ष्वच ॥ इतितथ्यंवचः श्रुत्वासुमुखे
नप्रभाषितम् ॥ १४ ॥ यादृशंहर्षमापेदेतादृशंवेद्म्यहंनहि ॥ उत्थायचाजिरेप्राप्तारोमाञ्चि

ततनूरुहा॥ १५॥हर्षविह्वलिताङ्गाश्रुमुञ्चन्तीराममैक्षत॥तावत्सरामोराजेन्द्रोनरयानमधि श्रितः ॥ १६ ॥ प्राप्तःस्वमातुर्भवनंकैकेय्याःसुनयःपुरः ॥ कैकेय्यपित्रपाभारनम्रारामं पुरःस्थितम्॥ १७॥ नोवाचकिंचिन्महतींचिन्तांप्राप्तवतीमुहुः ॥ सूर्यवंशध्वजोरामोमा तरंवीक्ष्यलज्जिताम्॥ १८॥ उवाचसान्त्वयंस्तांचवाक्यैर्विनयमाश्रितैः॥ ॥श्रीरामउ वाच॥ ॥ मातर्मयावनेगत्वासर्वमाचरितंतथा ॥ १९॥ अधुनाकरवैकिंवात्वदाज्ञातो जनन्यहो॥ मयान्यूनंकृतंनास्तिकथंमांनेक्ष्यसेपुनः॥ २०॥ आशीर्भिरभिनन्द्यैनंभरतं मांचवीक्षय॥ इतिश्रुत्वापितद्वाक्यंसानम्रवदनानघ॥ २१॥ शनैः शनैः प्रत्युवाचरामग च्छस्वमालयम्॥ रामोपिश्रुत्वावचनंजनन्याः पुरुषोत्तमः॥ २२॥ नमस्कृत्यययौगेहं सुमित्रायाः कृपानिधिः॥ सुमित्रापुत्रसहितंरामंदृष्ट्वामहामनाः ॥ २३ ॥ चिरंजीवचिरं जीवेत्याशीर्भिरभिनन्दितः॥ मातुश्चरामभद्रोपिचरणौप्रणिपत्यच ॥ २४ ॥परिष्वज्य मुदायुक्तोजगादवचनंपुनः॥ रत्नगर्भेममभ्रात्रालक्ष्मणेनकृतंयथा॥ २५॥ यथायमक

रोद्धीमान्ममदुःखापनोदनम् ॥ २६ ॥ रावणेनहृतासीतामयायत्प्राप्यतेपुनः ॥ मातस्त
त्सर्वमाविद्धिलक्ष्मणस्यविचेष्टितम् ॥ २७ ॥ दत्तामाशिषमागृह्यशिरसायंसुमित्रया ॥
निजमातुश्चभवनंप्रययौविबुधैर्वृतः ॥ २८ ॥मातरंवीक्ष्यहृषितांनिजदर्शनलालसाम् ॥
स्वयानादवरुह्याशुचरणावग्रहीद्धरिः ॥ २९ ॥ मातातद्दर्शनोत्कण्ठाविह्वलीकृतमानसा ॥
परिष्वज्यपरिष्वज्यपरांमुदमवापसा ॥ ३० ॥ शरीरेरोमहर्षोभूद्गद्गदावागभूत्तदा ॥ हर्षा
श्रूणितुसोष्णानिप्रवाहंप्रापुरापदात् ॥ ३१ ॥ जननींवीक्ष्यविनयीताटङ्कद्वयवर्जिताम् ॥
कराकल्पपदाकल्परहितांबिभ्रतींतनुम् ॥ ३२ ॥ किंचित्स्वदर्शनाद्धृष्टांकृशाङ्गींतांस्वशोक
तः ॥ दुःखस्यसभयोनायमितिमत्वाजगादताम् ॥ ३३ ॥ ॥ श्रीरामउवाच ॥ ॥ मातर्मया
त्वच्चरणौचिरकालंनसेवितौ ॥ ततःक्षमस्वापराधंभाग्यहीनस्यमामकम् ॥ ३४ ॥ येपुत्रा
मातृपित्रोर्नशुश्रूषायांसमुत्सुकाः ॥ तेमन्तव्याःपरामातःकीटकारेतसोद्भवाः ॥ ३५ ॥ किं
कुर्वेजनकाज्ञातो गतोवैदण्डकंवनम् ॥ तत्रापित्वत्कृपापाङ्गात्तीर्णोऽस्मिदुःखसागरम् ॥

॥ ३६ ॥ रावणेनहृतासीतालङ्कायांगमितापुनः ॥ त्वत्कृपातोमयालब्धातंहत्वाराक्षसे
श्वरम्॥ ३७ ॥ सीतेयंत्वच्चरणयोःपतितावैपतिव्रता ॥ संभावयाशुचकितांत्वत्पादार्पि
तमानसाम्॥३८॥ इतिश्रुत्वातुतद्वाक्यंपादयोःपतितांस्नुषाम्॥ आशीर्भिरभियुज्यैनांब
भाषेतांपतिव्रताम्॥ ३९ ॥सीतेस्वपतिनासार्द्धंचिरंविलसभामिनि ॥ पुत्रौप्रसूयचकुले
स्माकंपावयपावने॥ ४० ॥ त्वत्सदृश्यःपतिपराःपतिदुःखसुखानुगाः॥ भवन्तिदुःखभा
गिन्योनहिसत्यंजगत्त्रये ॥ ४१ ॥ विदेहपुत्रिस्वकुलंत्वयापावितमात्मना॥ रामपादाब्ज
युगुलमनुयान्त्यामहावनम्॥ ४२ ॥ किंचित्रंयत्पुमांसस्तुवैरिकोटिप्रभञ्जनः ॥ यस्यगेहे
सतीभार्यास्वपतिप्रियवत्सला॥ ४३ ॥ इत्युक्त्वारघुनाथस्यभार्यामञ्चितलोचनाम्॥ तु
ष्णींबभूवहृषिताप्रहृष्टस्वतनूरुहा ॥ ४४ ॥ अथभ्रातास्यभरतःपित्रादत्तंनिजंमहत् ॥
राज्यंनिवेदयामासरामचन्द्रायधीमते॥ ४५ ॥ मन्त्रिणस्तेप्रहृष्टाङ्गादैवज्ञान्मन्त्रकोविदा
न॥ आहूयसमुहूर्तंतेपप्रच्छुःपरमादरात्॥ ४६ ॥ शुभेमुहूर्तेसुदिनेशुभनक्षत्रसंयुते ॥ अ

भिषेकंमाहाराज्येकारयामासुरुद्यताः ॥ ४७ ॥ सप्तद्वीपवतींपृथ्वींव्याघ्रचर्मणिसुन्दरे ॥
लिखित्वोपरिराजेन्द्रोमहाराजोधितस्थिवान् ॥ ४८ ॥ तद्दिनादेवसाधूनांमनांसिप्रमुदंय
युः ॥ दुष्टानांचेतसोग्लानिरभवत्परतापिनाम् ॥ ४९ ॥ स्त्रियस्तुपतिभक्त्याचपतिव्रतप
रायणाः ॥ मनसापिकदापापंनाचरन्तिजनामने ॥ ५० ॥ दैत्यादेवास्तथानागायक्षासुर
महोरगाः ॥ सर्वेन्यायपथेस्थित्वारामाज्ञांशिरसादधुः ॥ ५१ ॥ परोपकरणेयुक्ताः स्वधर्म
सुखनिर्वृताः ॥ विद्याविनोदगमितादिनरात्रिक्षणाः शुभाः ॥ ५२ ॥ वातोपिमार्गसंस्था
नांबलान्नाहरतेमहान् ॥ वासांस्यपितुसूक्ष्माणितत्रचौरकथानहि ॥ ५३ ॥ धनदोप्यर्थि
नांरामोकारुण्यश्चकृपानिधिः ॥ भ्रातृभिः सहितोनित्यंगुरुदेवस्तुतिंव्यधात् ॥ ५४ ॥इति
श्रीप० पा० रामा० शेषवात्स्यायनसंवादेरघुवरस्यराज्याभिषेकोनामचतु० ध्यायः ॥४॥
॥ शेषउवाच ॥ ॥ अथाभिषिक्तंरामंतुतुष्टुवुः प्रणताःसुराः ॥ रावणाभिधदैत्येन्द्रवधहर्षि
तमानसाः ॥ १ ॥ ॥देवाऊचुः ॥ ॥ जयदाशरथेसुरार्तिहञ्जयदानववंशदाहक ॥ जयदे

ववराङ्गनागणग्रहणव्यग्रकरारिदारक ॥ २ ॥ तवयद्दनुजेन्द्रनायकंकवयोवर्णयितुंसमु
त्सुकाः ॥ प्रलयेजगतांततीःपुनर्ग्रससेत्वंभुवनेशलीलया ॥ ३ ॥ जयजन्मजरादिदुःख
कैः परिमुक्तप्रबलोद्धरोद्धर ॥ जयधर्मकरान्वयान्बुधौकृतजन्मन्नजरामराच्युत ॥ ४ ॥
तवदेववरस्यनामभिर्बहुपापाअपितेपवित्रिताः॥ किमुसाधुद्विजवर्यपूर्वकाःसुतनुंमानुष
तामुपागताः ॥५॥ हरविरिञ्चिनुतंतवपादयोर्युगलमीप्सितकामसमृद्धिदम्॥हृदिपवित्रय
वादिकचिह्नितैः सुरचितंमनसास्पृहयामहे ॥ ६ ॥ यदिभवान्नदधात्यभयंभुवोमदनमर्ति
तिरस्करकान्तिभृत् ॥ सुरगणाहिकथंसुखिनःपुनर्ननुभवन्तिघृणामयपावन ॥ ७ ॥ यदा
यदास्मान्दनुजाहिदुःखदास्तदातदात्वंभुविजन्मभाग्भवेः ॥ अजोव्ययोपीशवरोपिस
न्विभोस्वभावमास्थायनिजंनिजार्चितः ॥ ८ ॥ मृतसुधासदृशैरघनाशनैः सुचरितैरव
कीर्यमहीतलम् ॥ अमनुजैर्गुणशंसिभिरीशतेप्रविशचाशुपुनर्हिस्वकंपदम् ॥ ९ ॥अनादि
रद्योऽजररूपधारीहारीकिरीटीमकरध्वजाभः ॥ जयंकरोतुप्रसभंहतारिः स्मरारिसंसे

वितपादपद्मः ॥ १० ॥ इत्युक्त्वातेसुराःसर्वेब्रह्मेन्द्रप्रमुखामुहुः ॥ प्रणेमुररिनाशेनप्रीणिता
रघुनायकम् ॥ ११ ॥ इतिस्तुत्यातिसंहृष्टोरघुनाथोमहायशाः ॥ प्रोवाचतान्सुरान्वीक्ष्य
प्रणतान्नतकन्धरान् ॥ १२ ॥ ॥ रामउवाच ॥ ॥ सुरावृणुतमेयूयंवरंकिंचित्सुदुर्लभम् ॥
यंकोपिदेवोदनुजोनयक्षःप्रापसादरः ॥ १३ ॥ ॥ सुराऊचुः ॥ ॥ स्वामिन्भगवतःसर्वं
प्राप्तमस्माभिरुत्तमम् ॥ यदयंनिहतःशत्रुरस्माकंतुदशाननः ॥ १४ ॥ यदायदासुरोस्माकं
बाधांपरिदधातिभोः ॥ तदातदेतिकर्तव्यमेतावद्वैरिनाशनम् ॥ १५ ॥ तथेत्युक्त्वापुनर्वीरः
प्रोवाचरघुनन्दनः ॥ ॥ श्रीरामउवाच ॥ ॥ सुराःशृणुतमद्वाक्यमादरेणसमन्विताः ॥
॥ १६ ॥ भवत्कृतंमदीयैर्वैगुणैर्ग्रथितमद्भुतम् ॥ स्तोत्रंपठिष्यतिमुहुःप्रातर्निशिसकृन्नरः ॥
॥ १७ ॥ तस्यवैरिपराभूतिर्नभविष्यतिदारुणा ॥ नचदारिद्र्यसंयोगोनचव्याधिपराभवौ ॥
॥ १८ ॥ मदीयचरणद्वन्द्वेभक्तिस्तेषांतुभूयसी ॥ भविष्यतिमुदायुक्तेस्वान्तेपुंसांतुपाठतः
॥ १९ ॥ इयुक्त्वासोभवत्तूष्णींनरदेवशिरोमणिः ॥ सुराःसर्वेप्रहृष्टास्तेययुर्नाकंस्वकंस्व

कम् ॥ २० ॥ रघुनाथोपिभ्रातॄंस्तान्पालयंस्तातवद्बुधान् ॥ प्रजाःपुत्रानिवस्वीयाँल्लालयँ
ल्लोकनायकः ॥ २१ ॥ यस्मिन्शासतिलोकानांनाकालमरणंनृणाम् ॥ नरोगादिपराभूति
र्गृहेषुचमहीयसी ॥ २२ ॥ नेतिः[1]कदापिदृश्येतवैरिजंभयमेवच ॥ वृक्षाःसदैवफलिनोमहीभू
यिष्ठधान्यका ॥ २३ ॥ पुत्रपौत्रपरीवारसार्थकीकृतजीवनाः ॥ कान्तासंयोगजसुखैर्नि
रस्तविरहक्लमाः ॥ २४ ॥ नित्यंश्रीरघुनाथस्यपादपद्मकथोत्सुकाः ॥ कदापिपरनिन्दासुवा
चस्तेषांभवन्तिन ॥ २५ ॥ कारवो[2]पिकदापापंनाचरन्तिमनस्यहो ॥ रघुनाथकराघातदुःखश
ङ्काभिशंसिनः ॥ २६ ॥ सीतापतिमुखालोकनिश्चलीभूतलोचनाः ॥ लोकाबभूवुःसततं
कारुण्यपरिपूरिताः ॥ २७ ॥ राज्यंप्राप्यसुसंपन्नंसमृद्धबलवाहनम् ॥ ऋषिभिर्हृष्टपुष्टंचर
म्यंहाटकभूषणैः ॥ २८ ॥ संतुष्टमिष्टापूर्तानांधर्माणांनित्यकर्तृभिः ॥ सदासंपन्नसस्यंच
सुवसुक्षेत्रसंयुतम् ॥ २९ ॥ सुदेशंसुप्रजंस्वस्थंसुतृणंबहुगोधनम् ॥ देवतायतनानांचरा

१ ईतिः शलभमूषककीटकादिजंभयमित्यर्थः । २ शिल्पिनः ।

जिभिः परिशराजितम् ॥ ३० ॥ सुपूर्णायत्रवैग्रामाःसुवित्तर्धिविराजिताः ॥ सुपुष्पफलित्रि
मोद्यानाःसुस्वादुफलपादपाः ॥ ३१ ॥ सपद्मिनीककासारायत्रराजन्तिभूमयः ॥ सदम्भा
निम्नगायत्रनयत्रचनताक्वचित् ॥ ३२ ॥ कुलान्येवकुलीनानांवर्णानांनाधनानिच ॥
विभ्रमोयत्रनारीषुनविद्वत्सुचकर्हिचित् ॥ ३३ ॥ नद्यःकुटिलगामिन्योनयत्रविषयेप्र
जाः ॥ तमोयुक्ताःक्षपायत्रबहुलेषुनमानवाः ॥ ३४ ॥ रजोयुजःस्त्रियोयत्रनधर्मबहुला
नराः ॥ धनैरनन्धोयत्रास्तिजनोनैवचभोजनम् ॥ ३५ ॥ अनयःस्यन्दनोयत्रनचवैराजपू
रुषः ॥ दण्डःपरशुकुद्दालवालव्यजनराजिषु ॥ ३६ ॥ आतपत्रेषुनान्यत्रक्वचित्क्रोधोपरोध
जः ॥ अन्यत्राक्षिकवन्देभ्यःक्वचिन्नपरिदेवनम् ॥ ३७ ॥ आक्षिकाएवदृश्यन्तेयत्रपाशक
पाणयः ॥ जाड्यंवातजलेष्वेवस्त्रीमध्याएवदुर्बलाः ॥ ३८ ॥ कठोरहृदयायत्रसीमन्ति
न्योनमानवाः ॥ औषधेष्वेवयत्रास्तिकुष्ठयोगोनमानवे ॥ ३९ ॥ वेधोयत्रसुरत्नेषुशूलं
मर्तिकरेषुवै ॥ कम्पःसात्त्विकभावोत्थोनभयात्कापिकस्यचित् ॥ ४० ॥ संज्वरःकामजोय

तदारिद्र्यंकलुषस्यच ॥ दुर्लभत्वंसदैवस्यसुकृतेनचवस्तुनः ॥ ४१ ॥ इभाएवप्रमत्तावै
युद्धेवीच्योजलाशये॥दानहानिर्गजेष्वेवतीक्ष्णाएवहिकण्टकाः ॥४२ ॥बाणेषुगुणविश्ले
षोबन्धोक्तिःपुस्तकेदृढा ॥ स्नेहत्यागःखलेष्वेवनचवैस्वजनेजने ॥४३॥ तंदेशंपालयामा
सलालयंल्लालिताःप्रजाः ॥ धर्मसंस्थापयन्देशेदुष्टेदण्डधरोपमः ॥ ४४ ॥ एवंपालयतोदेशं
धर्मेणधरणीतलम् ॥ सहस्रंचव्यतीयुर्वैवर्षाण्येकादशप्रभो ॥ ४५ ॥ तत्रनीचजनाच्छ्रु
त्वासीतायाअपमानताम् ॥ स्वांचनिन्दांरजकतस्तांतत्याजरघूद्वहः ॥ ४६॥पृथ्वींपाल
यमानस्यधर्मेणनृपतेस्तदा ॥ सीतांविरहितामेकांनिदेशेनसुरक्षिताम् ॥ ४७ ॥ कदाचि
त्संसदोमध्ये ह्यासीनस्यमहामतेः ॥ आजगाममुनिश्रेष्ठःकुम्भोत्पत्तिर्मुनिर्महान् ॥४८॥
गृहीत्वार्घ्यंसमुत्तस्थौवसिष्ठेनसमन्वितः ॥ जनताभिर्महाराजोवार्धिशोषकमागतम् ॥
॥ ४९ ॥ स्वागतेनसुसंभाव्यपप्रच्छतमनामयम्॥ सुखोपविष्टंविश्रान्तंबभाषेरघुनन्दनः
॥ ५० ॥इति श्रीप०पा०शेषवात्स्यायनसंवादेरामा०अगस्तिसमागमोनामपं० ॥ ५॥

॥ शेषउवाच ॥ ॥ इत्थंस्वागतसंतुष्टंब्रह्मचर्यतपोनिधिम् ॥ उवाचमतिमान्वीरः सर्वलो
कगुरुर्मुनिम् ॥ १ ॥ स्वागतंतेमहाभागकुम्भयोनेतपोनिधे ॥ त्वद्दर्शनेनसर्वेवैपाविताः स
कुटुम्बकाः ॥ २॥ कच्चिन्मतिस्तेवेदेषुशास्त्रेषुपरिवर्तते ॥ त्वत्तपोविघ्नकर्तावैनास्तिभूमण्ड
लेक्वचित् ॥ ३ ॥ लोपामुद्रामहाभागयाचतेधर्मचारिणी ॥ यस्याः पतिव्रताधर्मात्सर्वं
भवतिशोभनम् ॥ ४ ॥ अपिशंसमहाभागधर्ममूर्तेकृपानिधे ॥ अलोलुपस्यकिंकार्यंक
रवाणिमुनीश्वर ॥ ५ ॥ त्वत्तपोभाग्यतः सर्वंभवतिस्वेच्छयाशुभम् ॥ तथापिमयिकृत्वै
वकृपांशंसमुनीश्वर ॥ ६ ॥ ॥ शेषउवाच ॥ ॥ इत्युक्तोलोकगुरुणाराजराजेनधीमता॥
उवाचरामंलोकेशंविज्ञानतरभाषया ॥ ७ ॥ ॥ अगस्त्यउवाच ॥ ॥ स्वामिंस्तवसुदुर्द
र्शंदर्शनंदैवतैरपि ॥ मत्वासमागतंविद्धिराजराजकृपानिधे ॥ ८ ॥ हतस्त्वयारावणाख्य
स्त्वसुरोलोककण्टकः ॥ दिष्ट्याद्यदेवाः सुखिनोदिष्ट्याराजाविभीषणः ॥ ९ ॥ रामत्वद्दर्श
नान्मेद्यगतंवैदुष्कृतंकिल ॥ संपूर्णोमेमनः कोशआनन्देनसुरोत्तम॥ १०॥ इत्युक्त्वासबभू

वाशुतूष्णींकुम्भसमुद्भवः ॥ रामसंदर्शनाह्लादविह्वलीकृतमानसः ॥ ११ ॥ रामः पप्रच्छ तंभूयोमुनिंज्ञानविशारदम् ॥ लोकातीतंभवद्भाविसर्वंजानासिसर्वतः ॥ १२ ॥ मुने कथयमेसर्वंपृच्छतेहिसुविस्तरम् ॥ कोसौमयाहतोयोहिरावणोविबुधार्दनः ॥ १३ ॥ कुम्भकर्णोपिकस्त्वेषकाजातिर्वैदुरात्मनः ॥देवोदैत्यः पिशाचोवाराक्षसोवामहामुने॥ १४॥ सर्वमाख्याहिसर्वज्ञसर्वंजानासिविस्तरात् ॥ अतः कथयमेसर्वं कृपांकृत्वाममोपरि ॥ ॥ १५ ॥ इतिश्रुत्वाततोवाक्यंकुम्भजन्मातपोनिधिः ॥ यत्पृष्टंरघुराजेनप्रवक्तुंतत्प्रचक्रमे ॥ १६ ॥ राजन्सृष्टिकरोब्रह्मापुलस्त्यस्तत्सुतोभवत् ॥ ततस्तुविश्रवाजज्ञेवेदविद्याविशारदः॥ १७ ॥तस्यपत्नीद्वयंजातंपातिव्रत्यचारित्रभृत्॥एकामन्दाकिनीनाम्नीद्वितीयाकैकसीस्मृता॥ १८॥पूर्वस्यांधनदोजज्ञेलोकपालविलासभृत् ॥योसौशिवप्रसादेनलङ्कावासमचीकरत् ॥ १९॥ विद्युन्मालीसुतायांतुपुत्रत्रयमभून्महत् ॥ रावणःकुम्भकर्णश्चतथा पुण्योविभीषणः॥२०॥राक्षस्युदरजन्मत्वात्संध्यासमयसंभवात् ॥ द्वयोरधर्मनिपुणा

मतिरासीन्महामते ॥ २१ ॥ एकदातुविमानेनपुष्पकेणसुशोभिना ॥ काञ्चनीयोपकल्पे
नकिङ्किणीजालमालिना ॥ २२ ॥ आरुह्यपितरंद्रष्टुंप्रायाच्छोभासमन्वितः ॥ स्वगणैः
संस्तुतोभूमन्नानारत्नविभूषणैः ॥ २३ ॥ आगत्यपित्रोश्चरणौपतित्वाचिरमात्मजः ॥ ह
र्षविह्वलितात्माचरोमाञ्चिततनूरुहः ॥ २४ ॥ उवाचमेद्यसुदिनंमहदद्यफलोदयः ॥ यन्मे
युष्मत्पदंदृष्टंमहापुण्यदर्शनम् ॥ २५ ॥ इत्यादिभिस्तुतिपदैःस्तुत्वागात्स्वकमन्दिरम् ॥
पितरावपिसंहृष्टौपुत्रस्नेहाद्बभूवतुः॥२६॥ तंदृष्ट्वारावणोधीमाञ्जगादनिजमातरम् ॥ को
ऽयंपुमान्सुरोवाथयक्षोवाथनरोत्तमः ॥ २७ ॥ कोसौममपितुःपादौसन्निषेव्यगतःपुनः ॥
महाभाग्यनिधिःस्वीयैर्गणैःसुपरिवारितः ॥ २८ ॥ केनेदंतपसालब्धंविमानंवायुवेगधृ
क् ॥ उद्यानारामलीलादिविलासस्थानमुत्तमम् ॥ २९ ॥ ॥ शेषउवाच ॥ ॥ इतिवाक्यंस
माकर्ण्यजननीशोषविह्वला ॥ उवाचपुत्रंविमनाःकिंचिन्नेत्रविकारिणी ॥ ३० ॥ रेपुत्रशृणु
मद्वाक्यंबहुशिक्षासमन्वितम् ॥ एतस्यजन्मकर्मादिविचारचतुराधिकम् ॥ ३१ ॥ सप

त्व्याममकुक्षिस्थंनिधानंसमुपास्थितम्॥येनस्वमातुर्विमलंकुलमुज्ज्वलितंमहत्॥ ३२ ॥
त्वंतुमत्कुक्षिजःकीटः पापःस्वोदरपूरकः ॥ यथाखरःस्वकंभारं जानातिनचतद्गुणम् ॥
॥ ३३ ॥तथात्वंलक्ष्यसेज्ञानीशयनासनभोगवान् ॥ सुप्तोगतःक्वचिद्भ्रष्टइत्येवंतवसंभवः
॥ ३४ ॥ अनेनतपसालब्धंशिवसंतोषकारिणा ॥ लङ्कावासोमनोवेगंविमानंराज्यसंप
दः ॥ ३५ ॥ सुधन्याजननीत्वस्यसुभाग्यासुमहोदया ॥ यस्याःपुत्रोनिजगुणैर्लब्धवा
न्महतांपदम् ॥ ३६ ॥ इतिक्रुधाभाषितमार्तयातयामात्रास्वयाकर्ण्यदुरात्मसत्तमः॥ रो
षंविधायात्मगतंपुनर्वचोजगाददृतांनिश्चयभृत्तपःप्रति॥ ३७॥ ॥रावणउवाच॥ जन
न्याकर्णयवचोममगर्वसमन्वितम्॥ रत्नगर्भात्वमेवासियस्याःपुत्रास्त्रयोवयम्॥ ३८ ॥
कोसौकीटःसधनदःकृतपःस्वल्पकंपनः ॥ कालङ्काकिंतुतद्राज्यंस्वल्पसेवकसंयुतम् ॥
॥ ३९ ॥ मातःशृणुममोत्साहात्प्रतिज्ञांकारणान्विताम्॥ नकेनापिकृतांकर्त्रीमहाभाग्येहि
कैकसि ॥ ४० ॥ यद्यहंभुवनंसर्वंवशेनस्थापयाम्यहम्॥ तपोभिर्दुष्कृतैःकृत्वाब्रह्मसंतो

षकारकैः ॥ ४१ ॥ अन्नोदकेसदात्यक्त्वानिद्रांक्रीडांतथापुनः ॥ चेत्कुर्यांपितृलोकस्यघा
तात्पापंभवेन्मम ॥ ४२ ॥ कुम्भकर्णोपिकृतवान्विभीषणसमन्वितः ॥ रावणेनसहभ्रात्रे
त्युक्त्वागाद्गिरिकाननम् ॥ ४३ ॥ ॥ इति श्रीपद्मपुराणेपातालखण्डे शेषवात्स्यायनसंवादे
रामाश्वमेधे षष्ठोऽध्यायः ॥ ६ ॥ ॥ ❀ ॥ ॥ ❀ ॥ ॥ ❀ ॥
॥ अगस्त्यउवाच ॥ ॥ अथोग्रंसतपोदैत्योदशवर्षसहस्रकम् ॥ चकारभानुमक्ष्णाचप
श्यन्नूर्ध्वपदेस्थितः ॥ १ ॥ कुम्भकर्णोपिकृतवांस्तपःपरमदुश्चरम् ॥ विभीषणस्तुधर्मात्मा
चचारपरमंतपः ॥ २ ॥ तदाप्रसन्नोभगवान्देवदेवः प्रजापतिः ॥ देवदानवयक्षादिमुकुटैः प
रिसेवितः ॥ ३ ॥ ददौराज्यंचसुमहद्भुवनत्रयभास्वरम् ॥ वपुश्चकृतवान्रम्यंदेवदानवसेवि
तम् ॥ ४ ॥ तदासंतापितोभ्राताधनदोधर्मबुद्धिमान् ॥ विमानंतुततोनीतंलङ्काचनगरीह
ठात् ॥ ५ ॥ भुवनंतापितंसर्वंदेवाश्चैवदिवंगताः ॥ हतवान्ब्राह्मणकुलंमुनीनांमूलकृन्तनः
॥ ६ ॥ तदातिदुःखितादेवाःसेन्द्राब्रह्माणमाययुः ॥ स्तुतिंचक्रुर्महात्मानोदण्डवत्प्रणतिंग

ताः ॥ ७ ॥ तेतुष्टुवुःसुराः सर्वेवाग्भिस्तथ्याभिरादृताः ॥ ततः प्रसन्नोभगवान्किंकरोमीति चाब्रवीत् ॥ ८ ॥ ततोनिवेदयांचक्रुर्ब्रह्मणेविबुधाः पुरः ॥ दशग्रीवाच्चसंकष्टंतथानिजपराभवम् ॥ ९ ॥ क्षणंध्यात्वाययौब्रह्माकैलासंत्रिदशैः सह ॥ तस्यशैलस्यपार्श्वेतुवैचित्र्येणसमाकुलाः ॥ १० ॥ स्थिताःसंतुष्टुवुर्देवाः शम्भुंशक्रपुरोगमाः ॥ ११ ॥ नमोभवायशर्वायनीलग्रीवायतेनमः ॥ नमःस्थूलायसूक्ष्मायबहुरूपायतेनमः ॥ १२ ॥ इतिसर्वमुखेनोक्तांवाणीमाकर्ण्यशंकरः ॥ प्रोवाचनन्दिनंदेवानानयेतिममान्तिकम् ॥ १३ ॥ एतस्मिन्नन्तरे देवा आहूतानन्दिनाचते ॥ प्रविश्यान्तःपुरेदेवाददृशुर्विस्मितेक्षणाः ॥ १४ ॥ ब्रह्मागत्यददर्शाथशंकरंलोकशंकरम् ॥ गणकोटिसहस्रैस्तुसेवितंमोदशालिभिः ॥ १५ ॥ नग्नैर्विरूपैः कुटिलैर्धूसरैर्विकटैस्तथा ॥ प्रणिपत्याग्रतः स्थित्वासहदेवैः पितामहः ॥ १६ ॥ उवाचदेवदेवेशंपश्यावस्थांदिवौकसाम् ॥ कृपांकुरुमहादेवशरणागतवत्सल ॥ १७ ॥ दुष्टदैत्यवधार्थंत्वंसमुद्योगंविधेहिभो ॥ सोपितद्वचनंश्रुत्वादैन्यशोकसमन्वितम् ॥ १८ ॥ त्रिदशैः स

हितैःसर्वैराजगामहरेःपदम् ॥ तुष्टुवुर्मुनयः सर्वेससुरोरगकिन्नराः ॥ १९ ॥ जयमाधवदेवे
शजयभक्तजनार्तिहन् ॥ विलोकयमहादेवालोकयस्वस्वसेवकान् ॥ इत्युच्चैर्जगदुःस
र्वेदेवाःशर्वपुरोगमाः ॥ २० ॥ इत्युक्तमाकर्ण्यसुराधिनाथोदृष्ट्वासुरार्तिंपरिचिन्त्यमानः ॥
जगाददेवाञ्जलदोच्चयागिरादुःखंतुतेषांप्रशमंनयन्निव ॥ २१ ॥ भोब्रह्मशर्वेन्द्रपुरोगमा
मराः शृण्वन्तुवाचंभवतांहितेरताम् ॥जानेदशग्रीवकृतंभयंवोतन्नाशयाम्यद्यकृतावतारः
॥ २२ ॥ पुरीत्वयोध्यारविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः ॥ प्रपालिताभूतलम
ण्डनीयाविराजतेराजितभूमिभागैः ॥ २३ ॥ तस्यादशरथोराजानिरपत्यःश्रियान्वितः ॥
पालयत्यधुनाराजादिक्चक्रजयवान्विभुः ॥ २४ ॥ सतुवन्ध्यादृष्यशृङ्गात्प्रार्थितापुत्रका
म्यया ॥ पुत्रेष्टिविधिनायष्ट्वामहाबलसमन्वितः ॥ २५ ॥ ततोहंप्रार्थितःपूर्वंतपसानेन
भोःसुराः॥पत्नीषुतिसृषुप्रीत्याचतुर्धास्यांभवत्कृते ॥२६॥ रामलक्ष्मणशत्रुघ्नभरताख्या
समन्वितः ॥ कर्तास्मिरावणोद्धारंसमूलबलवानहम् ॥ २७ ॥ भवन्तोपिस्वकैरंशैरवती

यंचरत्त्विह ॥ ऋक्षवानररूपेणसर्वत्रपृथिवीतले ॥ २८ ॥ इत्युक्त्वाविरराशुनभसीरि तवाङ्मुने ॥ देवाःश्रुत्वामहद्वाक्यंसर्वेसंहृष्टमानसाः ॥ २९ ॥ तेचक्रुर्गदितंयादृग्देवदेवे नधीमता ॥ स्वैस्वैरंशैर्महीपूर्णाऋक्षवानररूपिभिः ॥ ३० ॥ योसौविष्णुर्महादेवोदेवानां दुःखनाशकः ॥समत्वेनमहाराजभगवान्कृतविग्रहः ॥ ३१ ॥ भरतोयंलक्ष्मणश्चशत्रुघ्न श्चमहामते ॥ तावकांशाद्दशग्रीवोजानितश्चसुरार्द्दनः ॥ ३२ ॥ पूर्ववैरानुबन्धेनजानकींहृ तवान्पुनः ॥ सत्वयानिहतोदैत्योब्रह्मराक्षसजातिमान् ॥ ३३ ॥ पुलस्त्यपुत्रोदैत्येन्द्रःसर्व लोकैककण्टकः ॥ पातितःपृथिवीसर्वासुखमापमहेश्वर ॥ ३४ ॥ ब्राह्मणानांसुखंत्वद्यमु नीनांतापसंबलम् ॥ शिवानिसर्वतीर्थानिसर्वेयज्ञाःसुसंहिताः ॥ ३५ ॥ त्वयिराज्ञिजग त्सर्वंसदेवासुरमानुषम् ॥ सुखंप्रपेदेविश्वात्मञ्जगद्योनेनरोत्तम ॥ ३६ ॥ एतत्तेसर्वमा ख्यातंयत्पृष्टोऽहंत्वयानघ॥उत्पत्तिश्चाविपत्तिश्चमयामत्यनुसारतः ॥ ३७ ॥इत्थंनिशम्य दितिजेन्द्रकुलान्तकारीवार्तांमहापुरुषईश्वरईशिताच ॥ संरुद्धबाष्पगलदश्रुमुखारविन्दो

भूमौपपातसदसिप्रथितप्रभावः ॥ ३८ ॥ इति श्रीपद्मपुराणेपातालखण्डेशेषवात्स्या
यनसंवादेरामाश्वमेधेरावणोत्पत्तिकथनोनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ * ॥
॥ शेषउवाच ॥ ॥ वात्स्यायनमुनिश्रेष्ठकथापापप्रणाशिनी ॥ ब्रह्मण्यदेवदेवस्यसर्वध
र्मैकरक्षितुः ॥ १ ॥ राजानंमूर्छितंदृष्ट्वाकुम्भजन्मातपोनिधिः ॥ शनैःशनैःकरेणाशुपस्प
र्शाश्रुजगादच ॥ २ ॥ भोरामाश्वसिहिक्षिप्रंकिमर्थमवसीदसि ॥ भवान्दैत्यकुलच्छेत्ताम
हाविष्णुःसनातनः ॥ ३ ॥ भूतंभव्यंभवच्चैवजगत्स्थास्नुचरिष्णुच ॥ त्वदृतेनास्तिसश्चा
रिकिमर्थमिहमूर्छितः ॥४॥ श्रुत्वावाक्यंमहाराजःकुम्भजन्मसमीरितम्॥उत्तस्थौविगल
न्नेत्रोबाष्पपूरितसन्मुखः ॥ ५ ॥ उवाचदीनदीनांचविस्पष्टाक्षरविस्तराम् ॥ त्रपाभरनम
न्मूर्तिर्ब्रह्मद्रोहपराङ्मुखः ॥ ६ ॥ ॥ ॥श्रीरामउवाच ॥ ॥ अहोमेपश्यताज्ञानंविमूढस्यदु
रात्मनः ॥ यद्ब्राह्मणकुलेरूढंहतवान्काममलोलुपः ॥ ७ ॥ महिलार्थेत्वहंविप्रंवेदशास्त्रवि
वेकवत् ॥ हतवान्वाडवकुलंबुद्धिहीनोतिदुर्मतिः ॥ ८ ॥ इक्ष्वाकूणांकुलेजातुब्राह्मणोन

दुरुक्तिभाक् ॥ ईदृशंकुर्वताकर्ममयैतत्सुकलङ्कितम् ॥ ९ ॥ येब्राह्मणास्तुपूजार्हादानस
न्मानभोजनैः ॥ तेमयानिहताविप्राःशरसंघातसंहितैः ॥ १० ॥ काँल्लोकाननुगमिष्यामि
कुम्भीपाकोपिदुःसहः ॥ नतादृशंतीर्थमस्तियन्मांपावयितुंक्षमम् ॥ ११ ॥ नयज्ञोनतपो
दानंनवाचैवव्रतादिकम् ॥ यत्तुमेब्राह्मणद्रोग्धुर्ममपावनतारकम् ॥ १२ ॥ यैःकोपितंब्रह्म
कुलंनरैर्निरयगामिभिः ॥ तेनराबहुशोदुःखंभोक्ष्यन्तिनिरयंगताः ॥ १३ ॥ वेदामूलंतुध
र्माणांवर्णाश्रमविवेकिनाम् ॥ तन्मूलंब्राह्मणकुलंसर्ववेदैकशाखिनः ॥ १४ ॥ मूलच्छेत्तु
र्ममौद्धत्यात्कोलोकोनुभविष्यति ॥ किमद्यकरणीयंवैयेनमेहिशिवंभवेत् ॥ १५ ॥ शेष
उवाच ॥ ॥ विलपन्तंभृशंरामंराजेन्द्रंरघुपुङ्गवम् ॥ मायामनुष्यवपुषंकुम्भजन्माब्रवीद्वचः
॥ १६ ॥ ॥ अगस्त्यउवाच ॥ ॥ माविषादंमहावीरकुरुराजन्महामते ॥ नतेब्राह्मणह
त्यास्याद्दुष्टानांनाशमिच्छतः ॥ १७ ॥ त्वंपुराणःपुमान्साक्षादीश्वरःप्रकृतेःपरः ॥ कर्ताह
र्तावितासाक्षीनिर्गुणःस्वेच्छयागुणी ॥ १८ ॥ सुरापोब्रह्महत्याकृत्स्वर्णस्तेयीमहाघकृ

तु ॥ सर्वेत्वन्नामवादेनपूताः शीघ्रंभवन्तिहि ॥ १९ ॥ इयंदेवीजनकजामहाविद्यामहा-
ते॥ यस्याःश्रवणमात्रेणमुक्तायास्यन्तिसद्गतिम् ॥ २०॥रावणोपिनवैदैत्योवैकुण्ठेतवसे
वकः ॥ ऋषीणांशापतोवाप्तोदैत्यत्वंदनुजान्तक ॥ २१ ॥ तस्यानुग्रहकर्तात्वंनतुहन्तद्विज
न्मनः ॥ एवंसंचिन्त्यमाभूयोनिजंशोचितुमर्हसि॥२२ ॥इतिश्रुत्वाततोवाक्यंरामःपरपुरं
जयः ॥ उवाचमधुरंवाक्यंगद्गदस्वरभाषितम् ॥ २३ ॥ ॥ श्रीरामउवाच ॥ ॥ पातकं
द्विविधंप्रोक्तंज्ञाताज्ञातविभेदतः ॥ ज्ञातंयद्बुद्धिपूर्वंहिअज्ञतंतद्विवर्जितम् ॥ २४ ॥ बुद्धि
पूर्वंकृतंकर्मभोगेनैवविनश्यति ॥ नश्येदनुशयादन्यदिदंशास्त्रविनिश्चितम् ॥ २५॥ कुर्व
तोबुद्धिपूर्वंमेब्रह्महत्यांसुनिन्दिताम् ॥ नमेदुःखापनोदायसाधुवादः सुसंमतः ॥ २६ ॥ प्रब्रू
तंतादृशंमह्यंयादृशंपापदाहकम् ॥ व्रतंदानंमखंकिंचित्तीर्थमाराधनंमहत् ॥ २७॥ येन
मेविमलाकीर्तिर्लोकान्वैपावयिष्यति ॥ पापाचाराप्तकालुष्यान्ब्रह्महत्याहतप्रभान् ॥
॥२८॥ ॥शेषउवाच॥ ॥ इत्युक्तवन्तंतंरामंजगादसतपोनिधिः॥ सुरासुरनमन्मौलिम

 

णिनीराजिताङ्घ्रिकम् ॥ २९ ॥ शृणु राम महावीर लोकानुग्रहकारक ॥ विप्रहत्यापनोदाय तव यद्वचनं ब्रुवे ॥ ३० ॥ सर्वं स पापं तरति योऽश्वमेधं यजेत वै ॥ तस्मात्त्वं यज विश्वात्मन्वाजिमेधेन शोभिना ॥ ३१ ॥ सप्ततन्तुर्महीभर्त्रा त्वया साध्यो मनीषिणा ॥ महासमृद्धियुक्तेन महाबल सुशालिना ॥ ३२ ॥ स वाजिमेधो विप्राणां हत्यायाः पापनोदनः ॥ कृतवान्यो महाराजो दिलीपस्तव पूर्वजः ॥ ३३ ॥ शतक्रतुः शतं कृत्वा क्रतूनां पुरुषर्षभः ॥ पदमाप पामरावत्यां देवदैत्यसुसेवितम् ॥ ३४ ॥ मनुश्च सगरो राजा मरुत्तो नहुषात्मजः ॥ एते ते पूर्वजाः सर्वे यज्ञान्कृत्वा पदं गताः ॥ ३५ ॥ तस्मात्त्वं कुरु राजेन्द्र समर्थोऽसि समन्ततः ॥ भ्रातरो लोकपालाभा वर्तन्ते तव भावुकाः ॥ ३६ ॥ इत्युक्तमाकर्ण्य मुनेः स भाग्यवान्रघूत्तमो ब्राह्मणघातभीतः ॥ पप्रच्छ यागे सुमतिं चिकीर्षन्विधिं पुराविप्परिगीयमानः ॥ ३७ ॥ ॥ इति श्रीप० पा० शेषवात्स्यायनसंवादे रामाश्वमेधे अगस्त्योपदेशो नाम अष्टमोऽध्यायः ॥ ८ ॥



॥ श्रीराम उवाच ॥ ॥ कीदृशोऽश्वस्तत्र भाव्यः को विधिस्तत्र पूजने ॥ कथं वा शक्यते कर्तुं के

जेयास्तत्रवैरिणः ॥ १ ॥ ॥ अगस्त्यउवाच ॥ ॥ गङ्गाजलसमानेनवर्णेनवपुषाशुभः ॥
कर्णेश्यामोमुखेरक्तःपीतःपुच्छेसुलक्षितः ॥ २ ॥ मनोवेगःसर्वगतिरुच्चैःश्रवःसमप्रभः ॥
वाजिमेधेहयःप्रोक्तःशुभलक्षणलक्षितः ॥ ३ ॥ वैशाखपूर्णमास्यांतुपूजयित्वायथावि
धि ॥ पत्रंलिखित्वाभालेतुस्वनामबलचिह्नितम् ॥४॥ मोचनीयःप्रयत्नेनरक्षकैःपरिरक्षि
तः ॥ यत्रगच्छतियज्ञाश्वस्तत्रगच्छेत्सुरक्षकः ॥ ५ ॥ यस्तंबलान्निबध्नातिस्ववीर्यबलद
र्पितः ॥ तस्मात्प्रसभमानेयःपरिरक्षाकरैर्हयः ॥ ६ ॥ कर्त्रातावत्सुविधिनास्थातव्यंनिय
मादिह ॥ मृगशृङ्गधरोभूत्वाब्रह्मचर्यसमन्वितः ॥ ७ ॥ व्रतंपालयमानस्ययावद्वर्षमति
क्रमेत् ॥ यावद्दीनान्धकृपणाःपरितोष्याधनादिभिः ॥ ८॥ अन्नंतुबहुशोदेयंधनंवाभूरिमा
रिष ॥ यद्यत्प्रार्थयतेधीमांस्तत्तद्देवददातिहि ॥ ९ ॥ एवंप्रकुर्वतःकर्मयज्ञःसंपूर्णतांगतः ॥
करोतिसर्वपापानांनाशनंरिपुनाशन ॥ १० ॥ तस्माद्भवान्समर्थोसिकरणेपालनेर्चने ॥ कृ
त्वाकीर्तिंसुविमलांपावयान्याञ्जनान्नृप ॥ ११ ॥ ॥ श्रीरामउवाच ॥ ॥ विलोकय

द्विजश्रेष्ठवाजिशालांममाधुना ॥ तादृशाःसन्तिनोवाश्वाःशुभलक्षणलक्षिताः ॥ १२ ॥
इतिश्रुत्वातुतद्वाक्यमगस्त्यः करुणाकरः ॥ उत्तस्थौवीक्ष्यमाणोयंयागार्हान्वाजिनः शुभान् ॥ १३ ॥गत्वाथतत्रशालायांरामचन्द्रसमन्वितः ॥ ददर्शाश्वान्विचित्राङ्गान्मनोवेगान्महाबलान् ॥ १४ ॥ अवनितलगताःकिंवाजिराजस्यवंश्याः किमथरघुपतीनामेकतः कीर्तिपिण्डाः ॥किमिदममृतराशिर्वाहरूपेणसिन्धोर्मुनिरितिमनसोन्तर्विस्मयंप्रापपश्यन् ॥ १५॥ एकतःशोणदेहानांवाजिनांपङ्क्तिरुत्तमा ॥एकतःश्यामकर्णाश्वकस्तूरीकान्तिसप्रभाः ॥ १६ ॥ एकतःकनकाभाश्चत्वन्यतोनीलवर्णिनः ॥एकतःशबलैर्वर्णैर्विशिष्टैर्वाजिभिर्वृताः ॥ १७ ॥ एवंपश्यन्मुनिःसर्वान्कौतुकाविष्टमानसः ॥ ययावन्यत्रतान्द्रष्टुंयागयोग्यान्हयान्मुनिः ॥ १८ ॥ ददर्शतत्रशतशोबद्धांस्तादृशवर्णकान् ॥ दृष्ट्वाविस्मयमापेदेसमुनिर्हर्षिताङ्गकः ॥ १९ ॥ एकतःश्यामकर्णाश्वसर्वाङ्गैः क्षीरसन्निभान् ॥ पीतपुच्छान्मुखेरक्तान्शुभलक्षणलक्षितान् ॥ २० ॥ निरीक्ष्यपरितोनघान्विमलनीरधारानिभान्म

नोजवनशोभितान्विमलकीर्तिपुञ्जप्रभान् ॥ पयोनिधिविशोषकोमुनिरुवाचसीताप
तिंविचित्रहयदर्शनाद्धृषितनेत्रवक्त्रप्रभः ॥ २२ ॥ ॥ अगस्त्यउवाच॥ ॥ हयमेधक्र
तौयोग्यान्वाहांस्तेबहुशःशुभान् ॥ पश्यतोनेत्रयोर्मेद्यतृप्तिर्नास्तिरघूत्तम ॥ २३ ॥ रामच
न्द्रमहाभागसुरासुरनमस्कृत ॥ यज्ञंकुरुमहाराजहयमेधंसुविस्तरम् ॥ २४ ॥ सुरपतिरिव
सर्वान्यज्ञसङ्घान्करिष्यंस्तपनइवसुपर्वारातितोयंविशोष्यन् ॥ हतरिपुगणमुख्यंसांप
रायंविजित्यक्षितितलसुखभोगंकुर्विदंभूरिभोगः ॥ २५ ॥ इत्येवंवाक्यवादेनपरितुष्टा
खिलेन्द्रियः ॥ सर्वान्वैयज्ञसंभारानाजहारमनोहरान् ॥ २६ ॥ मुन्यन्वितोमहाराजःसर
यूतीरमागतः ॥ सुवर्णलाङ्गलैर्भूमिंविचकर्षमहीयसीम् ॥ २७ ॥ विलिख्यभूमिंबहुशश्चतु
र्योजनसंमितान् ॥ मण्डपान्रचयामासयज्ञार्थंसनरोत्तमः ॥ २८ ॥ कुण्डंतुविधिवत्कृत्वायो
निमेखलयान्विम् ॥ अनेकरत्नरचितंसर्वशोभासमन्वितम् ॥ २९ ॥ मुनीश्वरोमहाभा
गोवसिष्ठःसुमहातपाः ॥ सर्वंतत्कारयामासवेदशास्त्रविधिश्रितम् ॥ ३० ॥ प्रेषितास्तेन

मुनिनाशिष्यामुनिवराश्रमान् ॥ कथयामासुरुद्युक्तंहयमेधेरघूत्तमम् ॥ ३१ ॥ आकारि
तास्तदासर्वेऋषयस्तपतांवराः ॥ आजग्मुःपरमेशस्यदर्शनेत्वतिलालसाः ॥ ३२ ॥ नार
दोसितनामाचपर्वतःकपिलोमुनिः ॥ जातूकर्ण्योऽङ्गिराव्यास आर्ष्टिषेणोऽत्रिरासुरिः ॥
॥ ३३ ॥ हारीतोयाज्ञवल्क्यश्चसंवर्तःशुकसंज्ञितः ॥ इत्येवमादयोरामहयमेधवरंययुः ॥
॥ ३४ ॥ तान्सर्वान्पूजयामासरघुराजोमहामनाः ॥ प्रत्युत्थानाभिवादाभ्यामर्घ्यविष्टर
कादिभिः ॥ ३५ ॥ गांहिरण्यंददौतेभ्यःप्रायशोदृढविक्रमः ॥ महाभाग्यंत्वद्यमेस्तियद्यूयं
दर्शनंगताः ॥ ३६ ॥ ॥ शेषउवाच ॥ ॥ एवंसमाकुलेब्रह्मन्नृषिवर्यसमागमे ॥ धर्मवार्ताब
भूवाहोवर्णाश्रमसुसंमता ॥ ३७ ॥ ॥ वात्स्यायनउवाच ॥ ॥ काधर्मवार्तातत्रासीत्
किंवाकथितमद्भुतम् ॥ साधवःसर्वलोकानांकारुण्यात्किमुताब्रुवन् ॥ ३८ ॥ ॥ शेषउ
वाच ॥ ॥ तान्समेतान्मुनीन्दृष्ट्वारामोदाशरथिर्महान् ॥ पप्रच्छसर्वधर्मांश्चसर्ववर्णा
श्रमोचितान् ॥ ३९ ॥ तेतुपृष्टाहिरामेणधर्मान्प्रोचुर्महागुणान् ॥ तान्प्रवक्ष्यामितेसर्वा

न्यथाविधिशृणुष्वतान् ॥ ४० ॥ ॥ ऋषयऊचुः ॥ ॥ ब्राह्मणेनसदाकार्यंयजनाध्ययना
दिकम् ॥ वेदानपठित्वाविरजोनैवगार्हस्थ्यमाविशेत् ॥ ४१ ॥ ब्राह्मणेनसदात्याज्यंनी
चसेवानुजीवनम् ॥ आपद्गतोहिजीवेतनश्ववृत्त्याकदाचन ॥ ४२ ॥ ऋतुकालाभिगम
नंधर्मोयंगृहिणःपरः ॥ स्त्रीणांवरमनुस्मृत्याऽपत्यकामोथवाभवेत् ॥ ४३ ॥ दिवाभिगम
नंपुंसामनायुष्यकरंमतम् ॥ श्राद्धाहःसर्वपर्वाणियतस्त्याज्यानिधीमता ॥ ४४ ॥ तत्र
गच्छेत्स्त्रियंमोहाद्धर्मात्प्रच्यवतेपरात् ॥ ऋतुकालाभिगामीयःस्वदारनिरतश्चयः ॥४५ ॥
सर्वदाब्रह्मचारीहविज्ञेयःसगृहाश्रमी ॥ ऋतुःषोडशयामिन्यश्चतस्रस्तासुगर्हिताः ॥ ४६ ॥
पुत्रास्तास्वपियुग्मासुअयुग्माःकन्यकाःप्रजाः ॥त्यक्त्वाचन्द्रमसंदुष्टंमघांमूलंविहायच
॥४७॥शुचिःसन्निर्विशेत्पत्नींपुमृक्षेचविशेषतः॥शुचिंपुत्रंप्रसूयेतपुरुषार्थप्रसाधनम्४८
आर्षेविवाहेगोद्वन्द्वंयदुक्तंतत्प्रशस्यते ॥ शुल्कमण्वपिकन्यायाः कन्याक्रेतुस्तुपापकृत् ॥
॥ ४९ ॥ वाणिज्यंनृपतेःसेवावेदानध्यापनंतथा ॥ कुविवाहःक्रियालोपःकुलेपतनहेत

वः ॥ ५० ॥ अन्नोदकपयोमूलफलैर्वापिगृहाश्रमी ॥ गोदानेनतुयत्पुण्यंपात्रायविधिपूर्वकम् ॥ ५१ ॥ अनर्चितोतिथिर्गेहाद्भग्नाशोयस्यगच्छति ॥ आजन्मसंचितात्पुण्यात्क्षणात्सहिबहिर्भवेत् ॥ ५२ ॥ पितृदेवमनुष्येभ्योदत्त्वाश्नीतामृतंगृही ॥ स्वार्थंपचत्यघंभुङ्क्तेकेवलंस्वोदरंभरः ॥ ५३ ॥ षष्ठ्यष्टम्योर्विशेत्पापंतैलेमांसेसदैवहि ॥ चतुर्दश्यांतथामायांत्यजेतक्षुरमङ्गनाम् ॥ ५४ ॥ रजस्वलांनसेवेतनाश्नीयात्सहभार्यया ॥ एकवासानभुञ्जीतनभुञ्जीतोत्कटासने ॥ ५५ ॥ नाश्नतींस्त्रियमीक्षेततेजःकामोनरोत्तमः ॥ मुखेनोपधमेन्नाग्निंनग्नांनेक्षेतयोषितम् ॥ ५६ ॥ नाङ्घ्रिंप्रतापयेदग्नौनवस्त्वशुचिनिःक्षिपेत् ॥ प्राणिहिंसांनकुर्वीतनाश्नीयात्संध्ययोर्द्वयोः ॥ ५७ ॥ नाचक्षीतधयन्तींगांनैन्द्रंचापंप्रदर्शयेत् ॥ नदिवोद्धृतसारंचभक्षयेद्दधिनोनिशि ॥ ५८ ॥ स्त्रीधर्मिणींनाभिवादेन्नाद्याद्दातृप्तिरात्रिषु ॥ तौर्यत्रिकप्रियोनस्यात्कांस्येपादौनधावयेत् ॥ ५९ ॥ नधारयेदन्यभुक्तंवासश्चोपानहावपि ॥ नभिन्नभाजनेश्नीयान्नाश्नीतान्नंविदूषितम् ॥ ६० ॥ संविशेन्नार्द्रचरणोनोच्छिष्टः

क्वचिदाव्रजेत् ॥ शयानोवानचाश्नीयान्नोच्छिष्टःसंस्पृशेच्छिरः ॥ ६१ ॥ नमनुष्यस्तुतिं कुर्यान्नात्मानमवमानयेत् ॥ अभ्युद्यतंनप्रणमेत्परमर्माणिनोवदेत् ॥ ६२ ॥ एवंगार्हस्थ्य माश्रित्यवानप्रस्थाश्रमंव्रजेत् ॥ सस्त्रीकोवागतस्त्रीकोविरजेत्कृष्णमानसः ॥ ६३ ॥ इ त्येवमाद्योधर्मागदिताऋषिभिस्तदा ॥ श्रुतारामेणमहतासर्वलोकहितैषिणा ॥ ६४ ॥

॥ इति श्रीप० पा० शेषवात्स्यायनसंवादेरामाश्वमेधेधर्मोपदेशोनामनवमोऽध्यायः ॥ ९ ॥

॥ शेषउवाच ॥ ॥इत्थंसंशृण्वतोधर्मान्वसन्तः समुपस्थितः ॥ यत्रयज्ञक्रियादीनांप्रारम्भः सुमहात्मनाम् ॥ १ ॥ दृष्ट्वातंसमयंधीमान्वसिष्ठःकलशोद्भवः ॥ रामचन्द्रंमहाराजंप्रत्युवाच यथोचितम् ॥ २ ॥ ॥वसिष्ठउवाच ॥ ॥ रामचन्द्रमहाबाहोसमयःपर्यभूत्तव ॥ हयोयत्रप्र मुच्येतयज्ञार्थंपरिपूजितः ॥ ३ ॥ सामग्रीक्रियतांतत्रआहूयन्तांद्विजोत्तमाः ॥ करोतुपूजांभ गवान्ब्राह्मणानांयथोचिताम् ॥ ४ ॥ दीनान्धकृपणानांचदानंस्वान्तेसमुत्थितम् ॥ ददातुवि धिवत्तेषांप्रतिपूज्याधिमान्यच ॥ ५ ॥ भवान्कनकसत्पत्न्यादीक्षितोत्रव्रतंचर ॥ भूमिशा

यीब्रह्मचारीवसुभोगविवर्जितः ॥ ६ ॥ मृगशृङ्गधरःकट्यांमेखलाजिनदण्डभृत् ॥ करोतु यज्ञसंभारंसर्वद्रव्यसमन्वितम् ॥ ७ ॥ इतिश्रुत्वामहद्वाकयंवसिष्ठस्ययथार्थकम् ॥ उवाचलक्ष्मणंधीमान्नानार्थपरिबृंहितम् ॥ ८ ॥ ॥ श्रीरामउवाच ॥ ॥ शृणुलक्ष्मणमद्वाक्यं श्रुत्वातत्कुरुसत्वरम् ॥ हयमानययत्नेनवाजिमेधक्रियोचितम् ॥ ९ ॥ ॥ शेषउवाच ॥ श्रुत्वावाकयंरघुपतेःशत्रुजिल्लक्ष्मणस्तदा ॥ सेनापतिमुवाचेदंवचोविविधवर्णनम् ॥ १० ॥ ॥ लक्ष्मणउवाच ॥ ॥ वीराकर्णयमेवचःसुमधुरंश्रुत्वात्वरातःपुनःकार्यंतत्क्षितिपालमौलिमुकुटैर्घृष्टाङ्घ्रिरामाज्ञया ॥ सेनांकालबलप्रभञ्जनबलप्रोद्यत्समर्थाङ्गकांसज्जांसद्रथहस्तिपत्तिसुहयारोहैर्विधेह्यन्विताम् ॥ ११ ॥ सज्जीयतांवायुजवास्तुरङ्गास्तरङ्गमालाललिताङ्घ्रिपाताः ॥ सदश्वचारैर्बहुशस्त्रधारिभिःसंरोहितावैरिबलप्रहारिभिः ॥ १२ ॥ संलक्ष्य तांहस्तिनःपर्वताभाआधोरणैःप्रासकुन्ताग्रहस्तैः ॥ शूरैःसास्त्रैर्भूरिदानापहाराःक्षीबाणस्ते सर्वशस्त्रास्त्रपूर्णाः ॥ १३ ॥ विततबहुसमृद्धिभ्राजमानारथामेपवनजवनवेगैर्वाजिभिर्यु

ज्यमानाः ॥ विविधारिपुविनाशस्मारकैरायुधास्त्रैर्भृतवलभिविभागानीयतांसूतवृन्दैः ॥
॥ १४ ॥ पत्तयः शतशोमत्यमायान्त्वस्त्राग्र्यपाणयः ॥ हयमेधार्हवाहस्यरक्षणेविततोद्य
माः ॥ १५ ॥ इत्याकर्ण्यवचस्तस्यलक्ष्मणस्यमहात्मनः ॥ सेनानीः कालजिन्नामाकार
यामाससज्जताम् ॥ १६ ॥ दशध्रुवकमण्डितोलघुसुरोमशोभान्वितोविविक्तगलशुक्तिभृ
द्विततकण्ठकोशेमणिः ॥ मुखेविशदकान्तिधृत्कासितकान्तिभृत्कर्णयोर्व्यराजततदाहयो
धृतकराग्ररश्मिच्छटः ॥ १७ ॥ कलासंशोभितमुखः स्फुरद्रत्नविशोभितः ॥ मुक्ताफलानां
मालाभिः शोभितोनिर्ययौहयः ॥ १८ ॥ श्वेतातपत्ररचितः सितचामरशोभितः ॥ बहु
शोभापरीताङ्गोनिर्ययौहरिभिर्वृतः ॥ १९ ॥ अग्रतोमध्यतश्चैवपृष्ठतः सैनिकास्तथा ॥ दे
वाहरिंयथापूर्वंसेवन्तेसेवनोचितम् ॥ २० ॥ अथसैन्यंसमाहूयसर्वमाज्ञापयत्तदा ॥ हस्त्य
श्वरथपादातवृन्दैः सुबहुसंकुलम् ॥ २१ ॥ ततस्ततः समेतानांसैन्यानांश्रूयतेध्वनिः ॥ त
तोदुन्दुभिनादोभूत्तस्मिन्पुरवरेतदा ॥ २२ ॥ तन्निनादेनशूराणांप्रियेणमहतातदा ॥ कम्पन्ति

गिरिशृङ्गाणिप्रासादाविचलन्तिच ॥ २३ ॥ हेषारवोमहानासीद्वाजिनामुद्यतांनृप ॥ रथा
ङ्गवातसंघुष्टाधरासंचलतीवसा॥ २४ ॥ चलितैर्गजयूथैश्चपृथ्वीरुद्धासमन्ततः ॥ रजस्तु
प्रचलत्तत्रजनान्तर्द्धानमादधत् ॥ २५ ॥ निर्जगाममहासैन्यंछत्रैःसंच्छाद्यभास्करम् ॥
सेनान्याकालजिन्नाम्नाप्रेषितंजनसंकुलम् ॥ २६ ॥ गर्जन्तस्तत्रवीराग्र्याःकुर्वन्तोरणसं
भ्रमम् ॥ रघुनाथस्ययागायसज्जास्तेप्रययुर्मुदा ॥ २७ ॥ मृगमदमयमङ्गेष्वङ्गरागंदधानाः
कुसुमविमलमालाशोभितस्वोत्तमाङ्गाः ॥ मुकुटकटकभूषाभूषिताङ्गाः समस्ताःप्रययुर
वनिनाथप्रेरितास्तेपिसर्वे ॥ २८ ॥ इत्येवंतेमहाराजंययुःसेनाचरावराः ॥ धनुर्धराः पाश
धराःखड्गधारास्फुटक्रमाः ॥ २९ ॥ एवंशनैः शनैः प्राप्तो मण्डपंयागचिह्नितम् ॥ हयःखुर
क्षततलांभूमिंकुर्वन्नभःप्लवन् ॥ ३० ॥ रामोदृष्ट्वाहरिंप्राप्तंबहुसंतुष्टमानसः ॥ वसिष्ठप्रेरया
मासक्रियाकर्तव्यतांप्रति ॥ ३१ ॥ वसिष्ठोराममाहूयस्वर्णपत्नीसमन्वितम् ॥ प्रयोगंकार
यामासब्रह्महत्यापनोदनम् ॥ ३२ ॥ ब्रह्मचर्यव्रतधरोमृगशृङ्गपरिग्रहः ॥ तत्कर्मकारया

मासरामःपरपुरंजयः॥ ३३ ॥प्रारेभेयागकर्मार्थंकुण्डमण्डपसंज्ञितम्॥ तत्राचार्योभवेद्धीमान्वेदशास्त्रविचारवित्॥ ३४ ॥ वसिष्ठोरघुनाथस्यकुलपूर्वगुरुर्मुनिः ॥ ब्रह्मंस्तत्राचरद्ब्रह्मकर्मागस्त्यस्तपोनिधिः॥ ३५ ॥वाल्मीकिर्मुनिरध्वर्युर्मुनिःकण्वस्तुद्वारपः॥ अष्टौद्वाराणितत्रासन्सतोरणशुभानिवै॥ ३६ ॥द्वारिद्वारिद्वयंविप्रब्राह्मणस्याधिमन्त्रवित्॥ पूर्वद्वारिमुनिश्रेष्ठौदेवलासितसंज्ञितौ॥ ३७ ॥ दक्षिणद्वारिभूमानौकश्यपात्रीतपोनिधी ॥ पश्चिमद्वारिऋषभौजातूकर्ण्योथजाजलिः ॥ ३८ ॥ उत्तरद्वारितुमुनीद्वौद्वितैकततापसौ॥ एवंद्वारविधिंकृत्वावसिष्ठःकलशोद्भवः॥ ३९ ॥ हयवर्यस्यसत्पूजांकर्तुमारभतद्विज॥ सुवासिन्यःस्त्रियस्तत्रवासोलङ्कारभूषिताः ॥ ४० ॥ हरिद्राक्षतगन्धाद्यैःपूजयामासुरर्चितम्॥ नीराजनंततःकृत्वाधूपयित्वागुरूक्षणैः ॥ ४१ ॥ वर्धापनंततोवेश्याश्चक्रुस्तावाडवाज्ञया॥ एवंसंपूज्यविमलेभालेचन्दनचर्चिते॥ ४२ ॥कुङ्कुमादिकगन्धाढ्येसर्वशोभासमन्विते॥बबन्धभास्वरंपत्रंतप्तहाटकनिर्मितम्॥ ४३ ॥ तत्रालिखद्दाशरथेःप्रता

पबलमूर्जितम् ॥ सूर्यवंशध्वजोधन्वीधनुर्दीक्षागुरुर्गुरुः ॥ ४४ ॥ यंदेवाःसासुराःसर्वेन मन्तिमणिमौलिभिः ॥ तस्यात्मजोवीरबलदर्पहारीरघूद्वहः ॥ ४५ ॥ रामचन्द्रोमहाभागः सर्वशूरशिरोमणिः ॥ तन्मातांकोसलनृपपत्नीगर्भसमुद्भवा ॥ ४६ ॥ तस्याःकुक्षिभवं रत्नंरामःशत्रुक्षयंकरः ॥ करोतिहयमेधंवैब्राह्मणेनसुशिक्षितः ॥ ४७ ॥ रावणाभिधविप्रेन्द्र वधपापापनुत्तये ॥ मोचितस्तेनवाहानांमुख्योसौवाजिनांवरः ॥ ४८ ॥ महाबलपरीवा रपरिखाभिःसुरक्षितः ॥ तद्रक्षकोस्तितद्भ्राताशत्रुघ्नोलवणान्तकः ॥ ४९ ॥ हस्त्यश्वरथ पादातसेनासङ्घसमन्वितः ॥ यस्यराज्ञइतिश्रेष्ठोमानः स्यात्स्वबलोन्मदात् ॥ ५० ॥ वयं धनुर्धराःशूराःश्रेष्ठावयमिहोत्कटाः ॥ तेगृह्णन्तुबलाद्वाहंरत्नमालाविभूषितम् ॥ ५१ ॥ मनोवे गंकामजवंसर्वगत्याधिभास्वरम् ॥ ततोमोचयिताभ्राताशत्रुघ्नोलीलयाहयम् ॥ ५२ ॥ शरा सनविनिर्मुक्तवत्सदन्तैःशिलाशितैः ५३ इत्येवमादिविलिलेखमहामुनीन्द्रःश्रीरामचन्द्र भुजवीर्यलसत्प्रतापम् ॥ शोभानिधानमतिचञ्चलवायुवेगंपातालभूतलविशेषगतिंमुमो

च ॥ ५४ ॥ शत्रुघ्नमादिदेशाथरामः शस्त्रभृतांवरः ॥ याहिवाहस्यरक्षार्थंपृष्ठतःस्वैरगामि
नः ॥ ५५ ॥ शत्रुघ्नगच्छवाहस्यमार्गेभद्रंभवेत्तव ॥ भवेतांशत्रुविजयौरिपुकर्षणतेभु
जौ ॥ ५६ ॥ येयोद्धारः प्रतिरणगतास्तेत्वयावारणीयावाहंरक्षस्वकगणगणैः संयुतःसन्म
होर्व्याम् ॥ सुप्तान्भ्रष्टान्विगतवसनान्भीतभीतांस्तुनम्रांस्तान्माहन्याः सुकृतकृतिनो
येनशंसन्तिकर्म ॥ ५७ ॥ विरथाभयसंत्रस्तायेवदन्तिवयंतव ॥ तेत्वयानहिहन्तव्याःशत्रु
घ्नसुकृतैषिणा ॥ ५८ ॥ योहन्याद्विमदंमत्तंसुप्तंनग्नंभयातुरम् ॥ तावकोहंब्रुवाणंचसव्रज
त्यधमांगतिम् ॥ ५९ ॥ परस्वेचित्तवृत्तिंत्वंमाकृथाः पारदारिके ॥ नीचेरतिंनकुर्वीथाः स
र्वसद्गुणपूरितः ॥ ६० ॥ वृद्धानांप्रेरणंपूर्वंमाकुर्वींथारणंजय ॥ पूज्यपूजातिक्रमत्वंमावि
धेहिदयान्वितः ॥ ६१ ॥ गांविप्रंचनमस्कुर्याद्वैष्णवंधर्मसंयुतम् ॥ अभिवाद्यततोग
च्छेत्तत्रसिद्धिमवाप्नुयात् ॥ ६२ ॥ विष्णुःसर्वेश्वरः साक्षीसर्वव्यापकदेहभृत् ॥ येतदी
यामहाबाहोतद्रूपाविचरन्तिहि ॥ ६३ ॥ येस्मरन्तिमहाविष्णुंसर्वभूतहृदिस्थितम् ॥ तेम

न्तव्यामहाविष्णुसमरूपारघुद्वह ॥ ६४ ॥ यस्यस्वीयोनपारक्योयस्यमित्रसमोरिपुः ॥
तेवैष्णवाःक्षणादेवपापिनंपावयन्तिहि ॥ ६५ ॥ येषांप्रियंभागवतंयेषांवैब्राह्मणाः प्रियाः
॥ वैकुण्ठात्प्रेषितास्तेत्रलोकपावनहेतवे ॥ ६६ ॥ येषांवक्त्रेहरेर्नामहृदिविष्णुःसनात
नः ॥ उदरेविष्णुनैवेद्यः सश्वपाकोपिवैष्णवः ॥ ६७ ॥ येषांवेदाःप्रियतमानचसंसारजं
सुखम् ॥ स्वधर्मनिरतायेचतान्नमस्कुर्विहान्वितान् ॥ ६८ ॥ शिवेविष्णौनवाभेदोनच
ब्रह्ममहेशयोः ॥ तेषांपादरजःपूतंवहाम्यघविनाशनम् ॥ ६९ ॥ गौरींगङ्गांमहालक्ष्मींर्य
स्यनास्तिपृथक्कया ॥ तेमन्तव्यानराःसर्वेस्वर्गलोकादिहागताः ॥ ७० ॥ शरणागतरक्षीच
मानदानपरायणः ॥ यथाशक्तिहरेःप्रीत्यैसज्ञेयोवैष्णवोत्तमः ॥ ७१ ॥ यस्यनाममहापा
पराशिंदहतिसत्वरम् ॥ तदीयचरणद्वन्द्वेभक्तिर्यस्यसवैष्णवः ॥ ७२ ॥ इन्द्रियाणिवशेयेषांम
नोपिहरिचिन्तकम् ॥ तान्नमस्कृत्यपूयात्सद्याजन्ममरणान्तिकात् ॥ ७३ ॥ परस्त्रियंत्वंकर
वालवत्त्यजन्भवेर्यशोभूषणभूतिभूमिः ॥ एवंममादेशमथाचरंश्चलभेःपरंधामसुयोगगमी

ड्यम् ॥ ७४ ॥ ॥ इति श्रीप० पा० शेषवात्स्यायनसंवादेरा० शत्रुघ्नशिक्षानामद० ॥ १० ॥

॥ शेषउवाच ॥ ॥ एवमाज्ञाप्यभगवान्रामश्चामित्रकर्षणः ॥ वीरानालोकयन्भूयोज गादशुभयागिरा ॥ १ ॥ शत्रुघ्नस्यममभ्रातुर्वाजिरक्षाकरस्यवै ॥ कोगन्तापृष्ठतोरक्षंस्तन्नि देशप्रपालकः ॥ २ ॥ यःसर्ववीरान्प्रतिमुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसंघैः ॥ गृह्णा त्वसौमेकरवीटकंतद्भूमौयशःस्वंप्रथयन्त्सुविस्तरम् ॥ ३ ॥ इत्युक्तवतिरामेतुपुष्कलोभर तात्मजः ॥ जग्राहवीटकंतस्माद्रघुराजकराम्बुजात् ॥ ४ ॥ स्वामिन्गच्छामिशत्रुघ्नंपृष्ठरक्षा करोम्यहम् ॥ सन्नद्धःसर्वशस्त्रास्त्रचापबाणधरःप्रभो ॥ ५ ॥ सर्वमद्यक्षितितलंत्वत्प्रतापो विजेष्यति ॥ एतेनिमित्तभूतावैरामचन्द्रमहामते ॥ ६ ॥ भवत्कृपातःसकलंससुरासुरमा नुषम् ॥ उपस्थितंप्रयुद्धायतन्निषेधेक्षमोऽस्म्यहम् ॥ ७ ॥ सर्वस्वामीज्ञास्यतियन्ममविक्र मदर्शनात् ॥ एषगन्तास्मिशत्रुघ्नपृष्ठरक्षाप्रकारकः ॥ ८ ॥ एवंब्रुवन्तंभरतात्मजंसप्रस्तूयसा ध्वित्यनुमोदमानः ॥ शशंससर्वान्कपिवीरमुख्यान्प्रभञ्जनोद्भूतमुखान्हरिःप्रभुः ॥ ९ ॥

भोहनूमन्महावीरशृणुमद्वाक्यमादृतः॥त्वत्प्रसादान्मयाप्राप्तमिदंराज्यमकण्टकम्॥ १०॥ सीतयाममसंयोगेयोभवाञ्जलधिंतरेः ॥ चरितंतद्धरेविद्धिसर्वंतवकपीश्वर॥ ११ ॥ त्वं गच्छममसैन्यस्यपालकःसन्ममाज्ञया॥शत्रुघ्नःसोदरोमह्यंपालनीयस्त्वयाहयः॥ १२ ॥ यत्रयत्रमतिभ्रंशःशत्रुघ्नस्यप्रजायते॥ तत्रतत्रप्रबोद्धव्योभ्राताममममहामते॥ १३ ॥ इति श्रुत्वामहद्वाक्यंरामचन्द्रस्यधीमतः ॥ शिरसातत्समाधायप्रणाममकरोत्तदा ॥ १४ ॥ अथादिशन्महाराजो जाम्बवन्तंकपीश्वरम् ॥ रघुनाथस्यसेवायै कपिषूत्तमतेजसम् ॥ ॥ १५ ॥अङ्गदोगवयोमैन्दस्तथादधिमुखःकपिः॥सुग्रीवःप्लवगाधीशःशतवल्याक्षिकौक पी॥ १६ ॥ नीलोनलोमनोवेगोधिगन्तावानराङ्गजः॥इत्येवमादयोयूयंसज्जाभूताभवन्तु भोः॥ १७ ॥सर्वैर्गजैःसदश्वैश्चतप्तहाटकभूषणैः॥ कवचैःसशिरस्त्राणैर्भूषितायान्तुसत्व राः॥ १८॥ सुमन्त्रमाहूयसुमान्त्रिणंतदाजगादरामोबलवीर्यशोभनः॥ अमात्यमौलेवदके त्रयोग्यानराहयंपालयितुंसमर्थाः ॥ १९ ॥तदुक्तमेवमाकर्ण्यजगादपरवीरहा ॥ हयस्य

रक्षणेयोग्यान्बलिनोत्रनराधिपान् ॥ २० ॥ रघुनाथशृणुष्वैतान्नववीरान्सुसंहितान् ॥ धनुर्धरान्महाविद्यान्सर्वशस्त्रास्त्रकोविदान् ॥ २१ ॥ प्रतापाग्र्यंनीलरत्नंतथालक्ष्मीनिधिंनृपम् ॥ रिपुतापंचोग्रहयंतथाशस्त्रविदंनृपम् ॥ २२ ॥ राजन्योसौनीलरत्नोमहावीरोरथाग्रणीः ॥ सएवलक्ष्मंरक्षेतलक्ष्मंयुध्येतनिर्भयः ॥ २३ ॥ अक्षौहिणीभिर्दशभिर्यातुवाहस्यरक्षणे ॥ दंशितैस्ससशिरस्त्राणैर्महाबाहुभिरुद्धतैः ॥ २४ ॥ प्रतापाग्र्योयोत्ययंचरिपुगर्वंप्रशान्तयन् ॥ सव्यापसव्यबाणानांमोक्तासर्वास्त्रवित्तमः ॥ २५ ॥ एषोक्षौहिणिविंशत्यायातुयज्ञहयावने ॥सन्नद्धोरिपुनाशाययुवाकोदण्डदण्डभृत् ॥ २६ ॥ तथालक्ष्मीनिधिस्त्वेषयातुराजन्यसत्तमः ॥ यस्तपोभिःशतधृतिंप्रसाद्यास्त्राणिचाभ्यसन् ॥२७ ॥ ब्रह्मास्त्रंपाशुपत्यास्त्रंगारुडंनागसंज्ञितम् ॥मायूरंनाकुलंरौद्रंवैष्णवंमेघसंज्ञितम् ॥ २८ ॥ वज्रंपार्वतसंज्ञंचतथावायव्यसंज्ञितम् ॥इत्यादीनांतुशस्त्राणांसंप्रयोगविसर्गवित् ॥२९॥ सएषनिजसैन्यानामक्षौहिण्यैकयायुतः ॥ प्रयातुशूरमुकुटःसर्ववैरिप्रभञ्जनः ॥ ३० ॥ री

पुतापोयमेवाद्यगच्छत्वग्र्योधनुर्भृताम् ॥ सर्वशस्त्रास्त्रकुशलोरिपुवंशदवानलः ॥ ३१ ॥ ग
च्छतात्सेनयाबह्व्याचतुरङ्गसमेतया ॥शत्रुघ्नाज्ञांशिरस्येतेदधत्वद्यबलोत्कटाः ॥ ३२ ॥
उग्राश्वोपिमहाराजातथाशस्त्रविदेषच ॥ सर्वेयान्तुसुसंनद्धातववाहस्यपालकाः॥ ३३ ॥
इतिभाषितमाकर्ण्यमन्त्रिणःप्रजहर्षच ॥ आज्ञापयामासचतान्सुमन्त्रकथितान्भटान् ॥
॥३४ ॥तेऽनुज्ञांरघुनाथस्यप्राप्यमोदंप्रपेदिरे॥ चिरकालंसाम्परायंवाञ्छन्तोयुद्धदुर्मदाः
॥ ३५ ॥ संनद्धाःकवचाद्यैश्चतथाशस्त्रास्त्रवर्तनैः ॥ ययुःशत्रुघ्नसंवासंसीतापतिप्रणोदि
ताः ॥ ३६ ॥ ॥ शेषउवाच ॥ ॥ अथोक्तऋषिणारामोविधिवत्पूजयन्क्रमात् ॥
आचर्य्यादीनृषीन्सर्वान्यथोक्तवरदक्षिणैः ॥ ३७ ॥ आचार्यायददौरामोहस्तिनंषष्टिहा
यनम् ॥ हयमेकंमनोवेगं रत्नमालाविभूषितम् ॥ ३८॥ पौरटंरथमेकंचमणिरत्नविभू
षितम् ॥ चतुर्भिर्वाजिभिर्युक्तंसर्वोपस्करसंयुतम् ॥ ३९ ॥ मणिलक्षंतुप्रत्यक्षंमुक्ताफल
तुलाशतम् ॥ विद्रुमस्यतुलानांतुसहस्रंस्फुटतेजसम् ॥ ४० ॥ ग्राममेकंसुसंपन्नंनानाजन

सर्वेउत्कल्लोलाम्बुधिभ्रमाः ॥ ४७ ॥ कुशेनचलवेनाथशरव्रातैःप्रपीडितम् ॥ नशर्मलेभेस
कलंसैन्यंवीरप्रपूरितम् ॥ ४८ ॥ इतस्ततःप्रभग्नंतद्बलंत्रस्तंपुनःपुनः ॥ नकुत्रचिद्रणेस्थि
त्वायुद्धमैच्छद्बलान्वितः ॥ ४९ ॥ एतस्मिन्समयेराजाशत्रुघ्नःपरतापनः ॥ कुशंवीरं
ययौयोद्धुंताद्दशंलवसन्निभम् ॥ ५० ॥ कुशंदृष्ट्वाबलाक्रान्तंरामम्मूर्तिसमप्रभम् ॥ रथेतिष्ठ
न्हेममयेजगादपरवीरहा ॥ ५१ ॥ ॥ शत्रुघ्नउवाच ॥ ॥ कोसित्वंसन्निभोभ्रात्रालवेन
समहाबलः ॥ किंनामासिमहावीरकस्तेतातःक्वतेप्रसूः ॥ ५२ ॥ कथंवनेद्विजैर्जुष्टेतिष्ठ
सित्वंनरर्षभ ॥ सर्वंशंसयथायुध्येत्वयासहमहाबल ॥ ५३ ॥ इतिवाक्यंसमाकर्ण्यकुशः
प्रोवाचभूमिपम् ॥ मेघगम्भीरयावाचानादयन्रणमण्डलम् ॥ ५४ ॥ केवलंसुषुवेसीतापति
व्रतपरायणा ॥ वनेवसावोवाल्मीकेश्चरणार्चनतत्परौ ॥ ५५ ॥ मातृसेवासमुद्युक्तौसर्ववि
द्याविशारदौ ॥ कुशोलवइतिप्रख्यामागतौभूपतेनघ ॥ ५६ ॥ कस्त्वंवीरोरणश्लाघीकि
मर्थंहयसत्तमः ॥ मुक्तोस्तिसमरेत्वद्यजेतास्मिबलसंयुतः ॥ ५७ ॥ युध्यस्वत्वंमयासार्धं

यद्वीरोसिभूमिप ॥ इदानींपातयिष्यामिभवन्तंरणमूर्धनि ॥ ५८ ॥ शत्रुघ्नस्तंसुतंज्ञात्वा सीतायारामसंभवम् ॥ विसिष्मायस्वयंचित्तेकोपाद्धनुरुपाददत् ॥ ५९ ॥ तमात्तधनुषंदृष्ट्वा कुशःकोपसमन्वितः ॥ विस्फारयामासधनुःस्वीयंसुदृढमुत्तमम् ॥ ६० ॥ मुमोचबाणान्नि शिताञ्छत्रुघ्नःसर्वशस्त्रवित् ॥ तांश्चिच्छेदकुशःसर्वाँल्लीलयाप्रहसन्रणे ॥ ६१ ॥ बाणा श्चशतसाहस्राःकुशस्यचनृपस्यच ॥ भुवनंव्याप्नुवन्सर्वंतच्चित्रमभवन्मुने ॥ ६२ ॥ अग्न्य स्त्रेणकुशःसर्वान्ददाहतरसाबली ॥ शमयामासतंभूपःपर्जन्यास्त्रेणवीर्यवान् ॥ ६३ ॥ श मयामासतंभूपोवायव्येनातिविक्रमः ॥ पर्वतास्त्रेणतंवायुंक्षोभयन्तंसमावृणोत् ॥ ६४ ॥ वज्रास्त्रेणनृपःसंख्येचिच्छेदसनगोपलान् ॥ तदानारायणास्त्रंसमुमोचकुशउद्भटः ॥ ना रायणंतदाभूपंनाशकत्परिबाधितुम् ॥ ६५ ॥ तदाप्रकुपितोत्यन्तंकुशःकोपपरायणः ॥ उवा चभूपंशत्रुघ्नंमहाबलपराक्रमम् ॥ ६६ ॥ जानामित्वांमहावीरंसंग्रामेजयकारिणम् ॥ य त्वांनारायणास्त्रंमेनबबाधेभयानकम् ॥ ६७ ॥ इदानींपातयाम्यद्यभूमौत्वांनृपतेशरैः ॥

त्रिभिश्चेन्नकरोम्येतत्प्रतिज्ञांतर्हिमेशृणु॥६८॥योमनुष्यवपुःप्राप्यदुर्लभंपुण्यकोटिभिः॥
तन्नाद्रियेतसंमोहात्तस्यमेस्त्वत्रपातकम्॥ ६९ ॥सावधानोभवानत्रभवतुप्रधनाङ्गणे॥
पातयामिक्षितौसद्यइत्युक्त्वास्वशरासने ॥ ७० ॥ शरंसंरोपयामासघोरंकालानलप्रभ
म्॥लक्षीकृत्यरिपोर्वक्षोविपुलंकठिनंमहत्॥ ७१ ॥ तंसंधितंशरंदृष्ट्वाशत्रुघ्नःकोपमूर्च्छि
तः ॥ मुमोचबाणान्निशितान्कुशत्वग्भेदकारकान् ॥ ७२ ॥ सबाणोहृदयंतस्यभेत्तुंतत्प्र
चचालवै॥घोररूपोवह्निसमआशीविषवदुच्छ्वसन्॥७३॥सबाणोनृपवर्येणरामंस्मृत्वा
शुतक्षितः ॥ चिच्छेदकुशमुक्तंससायकंशितपर्वकम् ॥ ७४ ॥ तदात्यन्तंप्रकुपितःकुशो
बाणस्यकृन्तनात्॥अपरंसायकंचापेदधारशितपर्वकम्॥ ७५ ॥सयावत्तदुरोभेत्तुंकरो
तिचबलोद्धुरः ॥ तंतावदच्छिनत्तस्यशरंकालानलप्रभम्॥७६॥तदाकुशोमातृपादौस्मृ
त्वारोषसमन्वितः॥तृतीयंचापकेस्वीयेदधारशरमद्भुतम् ॥ ७७ ॥ शत्रुघ्नस्तमपिक्षिप्रं
छेत्तुंबाणंसमाददे ॥ तावद्विद्धःशरेणासौपपातधरणीतले ॥ ७८ ॥ हाहाकारोमहानासी

च्छत्रुघ्नेविनिपातिते ॥ जयमापकुशस्तत्रस्वबाहुबलदर्पितः ॥ ७१ ॥ ॥ इतिश्रीपद्मपुराणेपातालख ० शेषवात्स्यायनसंवादेरामाश्वमेधेकुशजयोनामत्रिषष्टितमो ० ॥६३॥

॥ शेषउवाच ॥ ॥ शत्रुघ्नंपतितंवीक्ष्यसुरथःप्रवरोनृपः ॥ प्रययौमणिनासृष्टेरथेतिष्ठन्महाद्भुते ॥ १ ॥ पुष्कलस्तुरणेपूर्वंपातितःसविचारयन् ॥ लवंययौतदायोद्धुंमहावीरंबलोन्नतम् ॥ २ ॥ सुरथःकुशमासाद्यबाणान्मुञ्चन्ननेकधा ॥ व्यथयामाससमरेमहावीरशिरोमणिः ॥ ३ ॥ सुरथंविरथंचक्रेबाणैर्दशभिरुच्छिखैः ॥ धनुश्चिच्छेदतरसासुदृढंगुणपूरितम् ॥ ४ ॥ अस्त्रप्रत्यस्त्रसंहारैःक्षेपणैःप्रतिक्षेपणैः ॥ अभवत्तुमुलंयुद्धंवीराणांरोमहर्षणम् ॥ ५ ॥ अत्यन्तंसमरोद्युक्तेसुरथेदुर्जयेनृपे ॥ कुशःसंचिन्तयामासकिंकर्तव्यंरणेमया ॥ ६ ॥ विचार्यनिशितंघोरंसायकंसमुपाददे ॥ हननायनृपस्यास्यमहाबलसमन्वितः ॥ ७ ॥ तमागतंशरंदृष्ट्वाकालानलसमप्रभम् ॥ छेत्तुंमतिंचकाराशुतावद्धग्नोमहाशरः ॥ ८ ॥ मुमूर्च्छसमरेवीरोमहावीरबलस्ततः ॥ पपातस्यन्दनोपस्थेसारथिस्तमुपाहरत् ॥ ९ ॥ सुरथेपति

196

तेदृष्ट्वाकुशंजयसमन्वितम् ॥ त्रासयन्तंवीरगणानियायपवनात्मजः ॥ १० ॥ समीरसूनुं प्रबलमायान्तंवीक्ष्यवानरम् ॥ जहासदर्शयन्दन्तान्कोपयन्निवतंक्रुधा ॥ ११ ॥ उवाचचह नूमन्तमेहित्वंममसंमुखम् ॥ भेत्स्येबाणसहस्रेणमृतोयास्यसियामिनीम् ॥ १२ ॥ इत्युक्तो हनुमाञ्ज्ञात्वारामसूनुंमहाबलम् ॥ स्वामिकार्यंप्रकर्तव्यमितिकृत्वाव्यधावत ॥ १३ ॥ शालमुत्पाट्यतरसाविशालंशतशाखिनम् ॥ कुशंप्रतिसमादायययौयोद्धुंमहाबलः ॥ १४ ॥ शालहस्तंसमायान्तंहनूमन्तंमहाबलम् ॥ त्रिभिःक्षुरप्रैर्विव्याधहृदिचन्द्रोपमैर्बली ॥ १५ ॥ सबाणविद्धस्तरसाकुशेनबलशालिना ॥ शालेनहृदिसंजघ्नेदन्तान्निष्पिष्यमारुतिः ॥ १६ ॥ शालाहतस्तदाबालःकिंचिन्नाकम्पतस्मयात् ॥ तदावीराःप्रशंसांतुप्रचक्रुस्तस्यबाल्यतः ॥ ॥ १७ ॥ सशालेनहतोवीरःसंहारास्त्रंसमाददे ॥ संहन्तुंवैरिणंकोपात्कुशःसपरमास्त्रवित् ॥ ॥ १८ ॥ संहारास्त्रंसमालोक्यदुर्जयंकुशमोचितम् ॥ दध्यौरामंस्वमनसाभक्तविघ्नविनाशक म् ॥ १९ ॥ तदामुक्तंकुशेनाशुतदस्त्रंहृदिमारुतेः ॥ लग्नंमहाव्यथाकारितेनमूर्च्छामितःपुनः ॥

॥ २० ॥ मूर्च्छांप्राप्तंतुतंदृष्ट्वाप्लवङ्गंबलसंयुतः ॥ विव्याधसायकैस्तीक्ष्णैःसैन्यंतत्सकलंमह
त्॥ २१ ॥तस्यबाणायुतैर्भग्नंबलंसर्वंरणाङ्गणे॥पलायनपरंजातंचतुरङ्गसमन्वितम्॥ २२ ॥
तदाकपिपतिःकोपात्सुग्रीवोरक्षकोमहान् ॥ अभ्यधावन्नगानेकानुत्पाट्यकुशमुद्धटम् ॥
॥ २३ ॥ कुशःसर्वान्प्रचिच्छेदलीलयाप्रहसन्नगान् ॥ पुनरप्यागतान्वृक्षांश्चिच्छेदतरसाब
ली ॥ २४ ॥ अनेकबाणव्यथितःसुग्रीवःसमराङ्गणे ॥ जग्राहपर्वतंघोरंकुशमस्तकमध्यतः
॥ २५॥कुशस्तंनगमायान्तंवीक्ष्यबाणैरनेकधा ॥निष्पिपेषचकाराशुमहारुद्राङ्गयोग्यताम्
॥ २६॥सुग्रीवस्तन्महत्कर्मदृष्ट्वाबालेननिर्मितम्॥जयाशांप्रतिनिर्वृत्तोबभूवसमराङ्गणे॥ २७
रणमध्येदुराक्रान्तंकुशंलाङ्गूलताडकम्॥ अत्यमर्षीरुषाक्रान्तस्तंहन्तुंनगमाददे॥ २८॥आ
त्मानंहन्तुमुद्युक्तंवीक्ष्यसुग्रीवमादरात् ॥ताडयामासबहुभिःसायकैःशितपर्वभिः ॥ २९ ॥
सताडितोबहुविधैःशरैःपीडासमन्वितः ॥ कुशंहन्तुंसमारब्धोययौशालंसमाददे ॥ ३० ॥
तदापिचकुशोवीरोवारुणास्त्रंसमाददे ॥ बबन्धतंचपाशेनदृढेनसलवाग्रजः ॥ ३१ ॥ सब

द्धः पाशकैः स्निग्धैः कुशेनबलशालिना ॥ पपातरणमध्येवैमहावीरैरलंकृते ॥ ३२ ॥ सुग्रीवंपतितंदृष्ट्वावीराःसर्वत्रदुद्रुवुः ॥ जयमापलवभ्रातामहावीरशिरोमणिः ॥ ३३ ॥ तावद्धवोभटाञ्जित्वापुष्कलंचाङ्गदंतथा ॥ प्रतापाग्र्यंवीरमणिंतथान्यानपिभूभुजः ॥ ३४ ॥ जयंप्राप्यरणेवीरोलवोभ्रातरमागमत् ॥ संग्रामेजयकर्तारंवैरिकोटिनिपातकम् ॥ ३५ ॥ परस्परंप्रहर्षितौपरिरम्भंप्रकुर्वतः ॥ जयंप्राप्तौतदावार्तांमुनेश्चक्रतुरुन्मदौ ॥ ३६ ॥ ॥ लव उवाच ॥ ॥ भ्रातस्तवप्रसादेननिस्तीर्णोरणतोयधिः ॥ इदानींवीररणकंशोधयावःसुशोभितम् ॥ ३७ ॥ इत्युक्त्वात्वरितंवीरौजग्मतुस्तौकुशीलवौ ॥ राज्ञोमौलिमणिंचित्रंजग्राहकनकाचितम् ॥ ३८ ॥ पुष्कलस्यलवोवीरोजग्राहमुकुटंशुभम् ॥ अङ्गदेचमहानर्घ्येशत्रुघ्नस्यापरस्यच ॥ ३९ ॥ गृहीत्वाशस्त्रसंघातंहनूमन्तंकपीश्वरम् ॥ सुग्रीवंसविधेगत्वाउभावपिबबन्धतुः ॥ ४० ॥ पुच्छेवायुसुतस्यायंगृहीत्वातुकुशानुजः ॥ भ्रातरंप्रत्युवाचेदंनेष्यामिस्वकमन्दिरम् ॥ ४१ ॥ आवयोर्जननीप्रीत्यैगृहीत्वापुच्छकेत्व

हम् ॥ क्रीडार्थमृषिपुत्राणांकौतुकार्थंममैवच ॥ ४२ ॥ एतच्छ्रुत्वाततोवाक्यमुवाचचकु
शोलवम् ॥ अहमेनंग्रहीष्यामिवानरंबलिनंदृढम् ॥ ४३ ॥ इत्येवंभाषमाणौतौबद्धातौब
लिनांवरौ ॥ पुच्छयोर्बलिनौधृत्वाजग्मतुःस्वाश्रमंप्रति ॥ ४४ ॥ स्वाश्रमायप्रगच्छन्तौ
वीक्ष्यतौकपिसत्तमौ ॥ कम्पमानौजगदतुरन्योन्यंभीतयागिरा ॥ ४५ ॥ हनूमान्कपिरा
जानंप्रत्युवाचभयार्द्रधीः ॥ एतौरामसुतावस्मान्नेष्यतःस्वाश्रमंप्रति ॥ ४६ ॥ मयापू
र्वंकृतंकर्मजानकींप्रतिगच्छता ॥ तत्रमेजानकीदेवीसंमुखाभून्मनोहरा ॥ ४७ ॥ सामां
द्रक्ष्यतिवैदेहीबद्धंपाशेनवैरिणा ॥ तदाहसिष्यतिवरात्रपामेत्रभविष्यति ॥ ४८ ॥ मयाकिं
मत्रकर्तव्यंप्राणत्यागोभविष्यति ॥ महद्दुःखंचापतितंसरामःकिंकरिष्यति ॥ ४९ ॥ सुग्री
वस्तद्वचःश्रुत्वाममाप्येवंमहाकपे ॥ नेष्यतयदिमामेवंनिधनंतुभविष्यति ॥ ५० ॥ एवं
कथयतोरेवह्यन्योन्यंभयभीतयोः ॥ कुशोलवश्चभवनंमातुःप्रापतुरोजसा ॥ ५१ ॥ ता
वायातौसमीक्ष्यैवजहर्षजननीतयोः ॥ अन्योन्यंपरमप्रीत्यापरिरेभेनिजौसुतौ ॥ ५२ ॥

ताभ्यांपुच्छगृहीतौतौवानरौवीक्ष्यजानकी ॥ हनूमन्तंचसुग्रीवंसर्ववीरंकपीश्वरम् ॥५३॥ जहासपाशबद्धौतौवीक्ष्यमाणावराङ्गना ॥ उवाचचविमोक्षार्थंवदन्तीवचनंवरम् ॥५४॥ पुत्रौप्रमुञ्चतांकीशौमहावीरौमहाबलौ ॥ ईक्षन्तौमांयदिस्फीतौप्राणत्यागंकरिष्यतः ॥ ॥५५॥ अयंवैहनुमान्वीरोयोददाहदनोःपुरीम् ॥ अयमप्यृक्षराजोहिसर्ववानरभूमिपः ॥ ॥५६॥ किमर्थंविधृतौकुत्राकिंवाकृतमनादरात् ॥ पुच्छेयुवाभ्यांविधृतौस्तमहान्विस्मयोस्तिमे ॥ ५७ ॥ इतिमातुर्वचःश्लक्ष्णंवीक्ष्यतांपुत्रकौतदा ॥ ऊचतुर्विनयश्रेष्ठौमहाबलसमन्वितौ ॥ ५८ ॥ मातःकश्चनभूपालोरामोदाशरथिर्बली ॥ तेनमुक्तोहयःस्वर्णभालपत्रःसुशोभितः ॥ ५९ ॥ तत्रैवंलिखितंमातरेकवीराप्रसूर्मम ॥ येक्षत्रियास्तेगृह्णन्तु नोचेत्पादतलार्चकाः ॥ ६० ॥ तदामयाविचारोवैकृतःस्वान्तेपतिव्रते ॥ भवतीक्षत्रियाकिंनवीरसूःकिंनवाभवेत् ॥ ६१ ॥ धाष्टर्यंतद्वीक्ष्यभूपस्यगृहीतोश्वोमयाबलात् ॥ जितंकुशेनवीरेणसैन्यंतत्पातितंरणे ॥ ६२ ॥ मुकुटोयंभूमिपतेर्जानीहिपतिदेवते ॥ अयमप्य

न्यवीरस्यपुष्कलस्यमहात्मनः ॥ ६३ ॥ जानीहिमुकुटंत्वन्यंमणिमुक्ताविराजितम् ॥ अश्वोयंमेमनोहारीकामयानोहिभूपतेः ॥ ६४ ॥ आरोहणायमद्भ्रातुर्जानीहिबलिनोहरे ॥ इमौकीशौमयारन्तुमानीतौबलिनांवरौ ॥ ६५॥ कौतुकार्थंतवैवैतौसंग्रामेयुद्धकारकौ ॥ इतिवाक्यंसमाकर्ण्यजानकीपतिदेवता ॥ ६६ ॥ जगादपुत्रौतौवीरौमोचयेथांपुनःपुनः॥ सीतोवाच ॥ ॥ युवाभ्यामनयःसृष्टोहतोरामहयोमहान् ॥ ६७॥ अनेकेपातितावीराइमौबद्धौकपीश्वरौ ॥ पितुस्तवहयोवीरौयागार्थंमोचितोमुना ॥ ६८ ॥ तस्यापिहतवन्तौकिंवाजिनंमखसत्तमे॥ मुञ्चतंप्लवगावेतौमुञ्चतंवाजिनांवरम् ॥ ६९ ॥ क्षम्यतांभूपतेर्भ्राताशत्रुघ्नःपरकोपनः ॥ जनन्यास्तद्वचःश्रुत्वाऊचतुस्तांबलान्वितौ ॥ ७० ॥ क्षात्रधर्मेणतंभूपंजितवन्तौबलान्वितम् ॥ नास्माकमनयोभाविक्षात्रधर्मेणयुध्यताम् ॥ ॥ ७१ ॥ वाल्मीकिनापुराप्रोक्तमस्माकंपठतांपुरः ॥ दुष्यन्तेनसमंयुद्धंभरतेनकृतंपुरा ॥ ॥ ७२ ॥ कण्वस्याश्रमकेवाहंधृत्वायागक्रियोचितम् ॥ तस्मात्सुतःस्वपित्रापियुध्येद्भ्रा

त्रापिचानुजः ॥ ७३ ॥ गुरुणाशिष्यएवापितस्मान्नोपापसंभवः ॥ त्वदाज्ञातोधुनाचा
वांदास्यावोहयमुत्तमम् ॥ ७४ ॥ मोक्ष्यावःकीशावेतौहिकरिष्यावोवचस्तव ॥ इत्युक्त्वा
मातरंवीरौगतौरणेकपीश्वरौ ॥ ७५ ॥ अमुञ्चन्तांहयंचापिहयमेधक्रियोचितम् ॥ सीता
देवीस्वपुत्राभ्यांश्रुत्वासैन्यंनिपातितम् ॥ ७६ ॥ श्रीरामंमनसाध्यात्वाभानुमैक्षतसाक्षि
णम् ॥ यद्यहंमनसावाचाकर्मणारघुनायकम् ॥ ७७ ॥ भजामिनान्यंमनसातर्हिजीवे
दयंनृपः ॥ सैन्यंचापिमहत्सर्वंयन्नाशितमिदंबलात् ॥ ७८ ॥ पुत्राभ्यांतत्तुजीवतमत्स
त्याज्जगतांपते ॥ इतियावद्वचोब्रूतेजानकीपतिदेवता ॥ ७९ ॥ तावद्बलंचतत्सर्वंजीवितंर
णमूर्द्धनि ॥ ८० ॥ ॥ इ० प० पा० शे० रा० सैन्यजीवनंनामचतुःषष्टितमो० ॥ ६४ ॥
॥ शेषउवाच ॥ ॥ क्षणान्मूर्च्छांजहौवीरःशत्रुघ्नःसमराङ्गणे ॥ अन्येपिवीराबलिनोमू
र्च्छांप्राप्ताःसुजीविताः ॥ १ ॥ शत्रुघ्नोवाजिनांश्रेष्ठंददर्शपुरतःस्थितम् ॥ आत्मानंचशिरस्त्राण
रहितंसैन्यजीवितम् ॥ २ ॥ वीक्ष्यचित्रमिदंस्वान्तेचकारचजगादह ॥ सुमतिंमन्त्रिणांश्रेष्ठं

मूर्च्छाविरहितंतदा ॥ ३ ॥ कृपांकृत्वाहयंप्रादाद्बालोयज्ञस्यपूर्तये॥गच्छामरामंतरसाहया
गमनकाङ्क्षिणम् ॥ ४ ॥ इत्युक्त्वासरथेस्थित्वाहयमादायवेगतः ॥ ययौतदाश्रमाद्दूरंभे
रीशङ्खविवर्जितः ॥ ५ ॥ तत्पृष्ठतोमहासैन्यंचतुरङ्गसमन्वितम् ॥ चचालकुर्वन्संभग्नंस्व
भारेणफणीश्वरम् ॥ ६ ॥ जवेनजाह्नवींतीर्त्वाकल्लोलजलशालिनीम् ॥ जगामविषये
स्वीयेस्वकीयजनशोभिते ॥ ७ ॥ पुष्कलेनयुतोराजासुरथेनसमन्वितः ॥ रथेमणिमये
तिष्ठन्महत्कोदण्डधारकः ॥ ८ ॥ हयंतंपुरतःकृत्वारत्नमालाविभूषितम् ॥ श्वेतातपत्त्रंतस्यै
वमूर्ध्निचामरभूषितम् ॥ ९ ॥ अनेकरथसाहस्रैःपरीतोबलिभिर्नृपैः ॥ उद्यत्कोदण्डललितै
र्वीरनादविभूषितैः ॥ १० ॥ क्रमेणनगरींप्राप्यसूर्यवंशविभूषिताम् ॥ अनेकैःकेतुभिःश्रेष्ठै
र्भूषितांदुर्गराजिताम् ॥ ११ ॥ रामःश्रुत्वाहयंप्राप्तंशत्रुघ्नेनसहामुना ॥ पुष्कलेनचवीरेण
ययौहर्षमनेकधा ॥ १२ ॥ कटकंनिर्दिदेशासौचतुरङ्गंमहाबलः॥ लक्ष्मणंप्रेषयामासभ्रा
तरंबलिनांवरम् ॥ १३ ॥ लक्ष्मणःसैन्यसहितोगत्वाभ्रातरमागतम् ॥ परिरेभेमुदाक्रान्तः

क्षतशोभितगात्रकम् ॥ १४ ॥ सर्वत्रकुशलंपृष्टोवार्तांचात्रचकारसः ॥ परमंहर्षमापन्नः शत्रुघ्नःसंगतोमुदा ॥ १५ ॥ सौमित्रिःस्वरथेस्थित्वाभ्रात्रासहमहामनाः ॥ सैन्येनमहता वीरौययौस्वनगरींप्रति ॥ १६ ॥ सरयूःपुण्यसलिलापवित्रितजगत्त्रया ॥ रामपादरजःपूताशरच्चन्द्रसमप्रभा ॥१७॥ हंसकारण्डवाकीर्णाचक्रवाकोपशोभिता ॥ विचित्रतरवर्णैश्च पक्षिभिर्नादिताभृशम् ॥ १८ ॥ मण्डपास्तत्रबहुशोरामचन्द्रेणकारिताः॥ ब्राह्मणानांवेदविदांपृथक्पाठनिनादकाः ॥ १९ ॥ क्षत्रियास्तत्रबहवोधनुःपाणिसुशोभिताः ॥ ज्याटङ्कारेणबहुनानादयन्तोमहीतलम् ॥ २० ॥ भुञ्जन्तेब्राह्मणायत्रविचित्रान्नैर्मनोहरैः॥ परस्परंप्रपश्यन्तोवार्तांचक्रुर्मनोहराम् ॥ २१ ॥ पायसान्नानिशुभ्राणिचन्द्रकान्तिसमानिच ॥ क्षीराज्यमधुयुक्तानिशर्करामिश्रितानिच ॥ २२ ॥ अपूपास्तत्रबहुलाश्चन्द्रबिम्बसमाःश्रिया ॥ कर्पूरादिसुगन्धेनवासिताःसुमनोहराः ॥ २३ ॥ फेनिकावटकाःस्निग्धाःशतच्छिद्राविरन्ध्रकाः॥ शष्कुल्योमण्डकामृष्टामधुरान्नसमन्विताः ॥ २४ ॥ भक्तंकुमुदसंकाशंमुद्गदालिवि

मिश्रितम् ॥ सुगन्धेनसमायुक्तमत्यन्तंप्रीतिदायकम् ॥ २५ ॥ ओदनोदधिनायुक्तोभीम
सेनसमन्वितः ॥ स्वादुपाककरैःसृष्टःपात्रेमुक्तःप्रवेषकैः ॥ २६ ॥ तत्रकेचिद्द्विजाःपात्रे
निक्षिप्तंवीक्ष्यपायसम् ॥ परस्परंतंप्रत्यूचुःकिमिदंदृश्यतेऽद्भुतम् ॥ २७ ॥ किंचन्द्रबिम्बंनभ
सःपतितंतमसोभयात् ॥ अमृतंतुभवत्यत्रमृत्युनाशकमद्भुतम् ॥ २८ ॥ तच्छ्रुत्वारोष
ताम्राक्षःप्रोवाचान्योद्विजोत्तमः ॥ नभवत्येवचन्द्रस्यबिम्बंत्वमृतविप्लुतम् ॥ २९ ॥ एक
मिन्दोर्वपुस्त्वेतदृश्यतेसदृशंकथम् ॥ ब्राह्मणानांसहस्रस्यपात्रेपात्रेपृथक्पृथक् ॥ ३० ॥त
तोजानीहिकुमुदंकर्पूरंवाभविष्यति ॥ माजानीहिमृगाङ्कस्यबिम्बंशुभ्राश्रियान्वितम् ॥
॥ ३१ ॥ तावदन्योरुषाक्रान्तोधुन्वन्स्वंमस्तकंतथा ॥ नजानन्तिद्विजामूढाःस्वादुज्ञानावि
चक्षणाः ॥ ३२ ॥ इदंतुक्षौद्रकन्दस्यरसेनपरिपाचितम् ॥ जानीहिशतपत्रस्यपुष्पाणिम
धुराणिच ॥ ३३ ॥ एवंपरस्परंविप्राःकन्दमूलफलाशिनः ॥ तर्कयन्तिमुनेप्रीतारसज्ञानेति
लोलुपाः ॥ ३४ ॥ तावदन्योद्विजःप्राहक्षत्रियाणांवरंजनुः ॥ भोक्ष्यन्तेतादृशंत्वन्नंमहापु

ण्यैरुपस्कृतम् ॥ ३५ ॥ तदातंप्रत्ययाद्विप्रोदात्तस्यफलमीदृशम् ॥ येदद्त्यग्रजन्मभ्यः प्रामुवन्तितईप्सितम् ॥ ३६ ॥ यैरर्चितोनैवहरिर्नैवेद्यैर्विविधैर्मुहुः ॥ तेषामेतादृशंभोज्यंन भवेदक्षिगोचरम् ॥ ३७ ॥ यैर्नरैर्नाग्रजन्मानोभोजिताविविधैरसैः ॥ भुञ्जतेतेस्वादुरसं पापिनांचक्षुरुज्झितम् ॥ ३८ ॥ एवंविधैरसैर्मृष्टैर्भोजिताद्विजसत्तमाः ॥ मण्डपेविपठन्तस्ते शब्दब्रह्मविचक्षणाः ॥३९॥ नृत्यन्त्येकेहसन्त्येकेनदन्त्येकेप्रहर्षिताः ॥ उत्सवोबहुरुद्भाति तत्रशत्रुघ्नआगमत्॥४०॥रामःशत्रुघ्नमायान्तंपुष्कलेनसमन्वितम् ॥ निरीक्ष्यमुदमुद्भूतांर क्षितुंनाशकत्तदा ॥ ४१ ॥ यावदुत्तिष्ठतेरामोभ्रातरंहयपालकम् ॥ तावद्रामपदेलग्नःशत्रु घ्नोभ्रातृवत्सलः ॥ ४२ ॥ पादयोःपतितंवीक्ष्यभ्रातरंविनयान्वितम् ॥ परिरेभेदृढंप्रीतःक्ष तसंशोभिताङ्गकम् ॥ ४३ ॥ अश्रूणिबहुधामुञ्चन्हर्षाच्छिरसिराघवः ॥ अत्यन्तंपरमांप्रा पमुदंवचनदूरगाम् ॥ ४४ ॥ पुष्कलंस्वीयपदयोर्नम्रंविनयविह्वलम् ॥ सुदृढंभुजयोर्मध्ये विनीयापीडयन्भृशम् ॥ ४५ ॥ हनूमन्तंतथावीरंसुग्रीवंचाङ्गदंतथा ॥ लक्ष्मीनिधिंजन

कजंप्रतापाग्र्यंरिपुंजयम् ॥४६॥ सुबाहुंसुमदंवीरंविमलंनीलरत्नकम् ॥ सत्यवन्तंवीरमणिं सुरथंरामसेवकम् ॥ ४७ ॥ अन्यानपिमहाभागान्रघुनाथःस्वयंतदा ॥ परिरेभेदृढंस्निग्धा न्पादयोःप्रणतान्नृपान् ॥ ४८ ॥ सुमतिःश्रीरघुपतिंभक्तानुग्रहकारकम् ॥ परिरभ्यदृढंप्री तःसंमुखेतिष्ठदुन्नतः ॥ ४९ ॥ तदारामोनिजामात्यंवीक्ष्यसान्निध्यमागतम् ॥ उवाचपर मप्रीत्यामन्त्रिणंवदतांवरः॥ ५० ॥ सुमतेमन्त्रिणांश्रेष्ठशंसमेवाग्मिनांवर ॥ कएतेभूमिपाः सर्वेकथमत्रसमागताः ॥ ५१ ॥ कुत्रकुत्रहयःप्राप्तःकेनकेननियन्त्रितः ॥ कथंवैमोचितो भ्रात्रामहाबलसुशालिना ॥ ५२ ॥ ॥ शेषउवाच ॥ ॥ इत्युक्तोमन्त्रिणांश्रेष्ठःसुमतिःप्रा हराघवम् ॥ प्रहसन्मेघगम्भीरनादेनचसुबुद्धिमान् ॥ ५३ ॥ ॥सुमतिरुवाच ॥ ॥ सर्व ज्ञस्यपुरस्तेद्यमयाकथमुदीर्यते॥पृच्छसित्वंलोकरीत्यासर्वंजानासिसर्वदृक् ॥ ५४ ॥ तथा पितवनिर्देशंशिरस्याधायसर्वदा ॥ ब्रवीमितच्छृणुष्वाद्यसर्वराजशिरोमणे ॥ ५५ ॥ त्व त्प्रसादादहोस्वामिन्सर्वत्रजगतीतले ॥ परिबभ्रामतेवाहोभालपत्रसुशोभितः ॥ ५६ ॥

नकश्चित्तंनिजग्राहस्वनामबलदर्पितः॥स्वंस्वंराज्यंसमर्प्याथप्रणेमुस्तेपदाम्बुजम् ॥५७॥
कोवारावणदैत्येन्द्रनिहन्तुर्वाजिसत्तमम्॥गृह्णातिविजयाकाङ्क्षीजरामरणवर्जितः॥ ५८ ॥
अहिच्छत्रांगतस्तावत्तववाजीमनोरमः॥ तद्राजासुमदःश्रुत्वाहयंप्राप्तंतवप्रभो ॥ ५९ ॥
सपुत्रःप्रबलःसर्वसैन्येनबलिनावृतः॥ सर्वंसमर्पयामासराज्यंनिहतकण्टकम् ॥ ६० ॥ यो
राजाजगतांनेत्रींमातरंजगदम्बिकाम् ॥ प्रसाद्यचिरमायुष्यंलेभेराज्यमकण्टकम् ॥ ६१ ॥
सएषत्वांप्रणमतिसुमदःप्रभुसेवितम् ॥ तंगृहाणकृपादृष्ट्याचिरादर्शनकाङ्क्षकम् ॥ ६२ ॥
ततःसुबाहुभूपस्यनगरेबलपूरिते ॥ दमनस्तस्यवैपुत्रःप्रजग्राहहयोत्तमम् ॥ ६३ ॥ तेनसा
कंमहद्युद्धंबभूवदमनेनच ॥ पुष्कलोजयमापेदेसंमूर्छ्यसुभुजात्मजम् ॥ ६४ ॥ ततःसु
बाहुःसंक्रुद्धोरणेपवनजंबलात् ॥ युयुधेतवपादाब्जसेवकंबलिनांवरम् ॥ ६५ ॥ तस्यपा
दाहतोज्ञानंप्राप्यशापतिरस्कृतम् ॥ तुभ्यंसमर्प्यसकलंवाजिनःपालकोभवत् ॥ ६६ ॥
एषत्वांसुभुजोराजाप्रणमत्युन्नताङ्गकः ॥ कृपादृष्ट्याभिषिञ्चत्वंसुबाहुंनयकोविदम् ॥

॥६७॥ततोमुक्तोहयोरेवाहदेसनिमममज्जह ॥ तत्रप्राप्तंमोहनास्त्रंशत्रुघ्नेनबलीयसा ॥६८॥
ततोदेवपुरेप्रागाच्छिववासविभूषिते ॥ तत्रत्यंतुविजानासियतस्त्वंतत्रचागतः ॥६९॥
विद्युन्मालीहतोदैत्यःसत्यवान्संगतस्ततः ॥ सुरथेनसमंयुद्धंजानासित्वंमहामते ॥७०॥
ततःकुण्डलकान्मुक्तोहयोबभ्रामसर्वतः ॥ नकश्चित्तंनिजग्राहस्ववीर्यबलदर्पितः ॥७१॥
वाल्मीकेराश्रमेरम्येहयःप्राप्तोमनोरमः ॥ तत्रयत्कुतुकंजातंतच्छृणुष्वनरोत्तम ॥७२॥
तत्रार्भस्तवसारूप्यंबिभ्रत्षोडशवार्षिकः ॥ जग्राहवीक्ष्यपत्राङ्कंवाजिनंबलवत्तमः ॥
॥७३॥तत्रकालजितायुद्धंमहज्जातंनरोत्तम ॥ निहतस्तेनवीरेणशितधारेणहेतिना ॥
॥ ७४ ॥ अनेकेनिहताःसंख्येपुष्कलाद्यामहाबलाः ॥ मूर्च्छितंचापिशत्रुघ्नंचक्रेवीरशि
रोमणिः ॥ ७५ ॥ तदाराजामहद्दुःखंविचार्यहृदिसंयुगे ॥ कोपेनमूर्च्छितंचक्रेवीरोहिव
लिनांवरः ॥७६॥ सयावन्मूर्छितोराज्ञातावदन्यःसमागतः ॥ तेनैतेनचसंजीव्यनाशितं
कटकंतव ॥ ७७ ॥ सर्वेषांमूर्छितानांतुशस्त्राण्याभरणानिच ॥ गृहीत्वावानरौबद्धौज

ग्मतुःस्वाश्रमंप्रति ॥ ७८ ॥ कृपांकृत्वापुनस्तेनदत्तोश्वोयज्ञियोमहान् ॥ जीवनंप्रापितं सर्वंकटकंनष्टजीवितम् ॥ ७९ ॥ वयंगृहीत्वातंवाहंप्राप्तास्तवसमीपतः ॥ एतदेवमयाज्ञा तंतदुक्तंतेपुरोवचः ॥ ८० ॥ ॥ इतिश्रीपद्मपुराणेपातालखण्डेशेषवात्स्यायनसंवादेरा माश्वमेधेसुमतिनिवेदनंनामपञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥*॥ ॥*॥

शेषउवाच ॥ ॥ कथितौवैसुमतिनावाल्मीकेराश्रमेशिशू ॥ पुत्रौस्वीयावितिज्ञात्वा वाल्मीकिंप्रतिसंजगौ ॥ १ ॥ ॥ श्रीरामउवाच ॥ ॥ कौशिशूममसारूप्यधारकौबलि नांवरौ ॥ किमर्थंतिष्ठतस्तत्रधनुर्विद्याविशारदौ ॥ २ ॥ अमात्यकथितौश्रुत्वाविस्मयोम मजायते ॥ यौशत्रुघ्नंहनूमन्तंलीलयाऽबबन्धतुः ॥ ३ ॥ तस्माच्छंसमुनेसर्वंबालयोश्चवि चेष्टितम् ॥ यथामेपरमाप्रीतिर्भवत्येवमभीप्सिता ॥ ४ ॥ इतितत्कथितंश्रुत्वाराजराज स्यधीमतः ॥ उवाचपरमंवाक्यंस्पष्टाक्षरसमन्वितम् ॥ ५ ॥ ॥ वाल्मीकिरुवाच ॥ ॥ तवान्तर्यामिणोनॄणांकथंज्ञानंचनोभवेत् ॥ तथापिकथयाम्यत्रतवसंतोषहेतवे ॥ ६ ॥ रा

जन्यौबालकौमत्यमाश्रमेबलिनांवरौ ॥ त्वत्सारूप्यधरौस्वाङ्गमनोहरवपुर्धरौ ॥ ७॥
त्वयायदावनेत्यक्ताजानकीवैनिरागसी ॥ अन्तर्वत्नीवनेघोरेविलपन्तीमुहुर्मुहुः ॥८॥कु
रीमिवदुःखार्तांवीक्ष्याहंतववल्लभाम् ॥ जनकस्यसुतांपुण्यामाश्रमेत्वनयंतदा ॥ ९ ॥
तस्याःपर्णकुटीरम्यारचितामुनिपुत्रकैः॥ तस्यामभूतांपुत्रौद्वौभासयन्तौदिशोदश ॥१०॥
तयोरकरवंनामकुशोलवइतिस्फुटम् ॥ वव्रधातेनिशंतत्रशुक्लपक्षेयथाशशी ॥ ११ ॥
कालेनोपनयाद्यानिसर्वाणिकृतवानहम् ॥ वेदान्साङ्गानहंसर्वान्ग्राहयामासभूपते॥१२॥
सर्वाणिसरहस्यानिशृणुष्वमुखतोमम ॥ आयुर्वेदंधनुर्विद्यांशस्त्रविद्यांतथैवच॥ १३ ॥वि
द्यांजालंधरींचाथसंगीतकुशलौकृतौ ॥ गङ्गाकूलेगायमानौलताकुञ्जवनेषुच॥ १४ ॥
चञ्चलौचलचित्तौतौसर्वविद्याविशारदौ ॥ तदाहमतिसंतोषंप्राप्तश्चाहंरघूत्तम ॥ दत्त्वास
र्वाणिचास्त्राणिमस्तकेनिहितःकरः॥ १५ ॥ अतीवगानकुशलौदृष्ट्वालोकाविसिस्मिरे ॥
षड्जमध्यमगान्धारस्वरभेदविशारदौ॥ १६ ॥तथाविधौविलोक्याहंगापयामिमनोहर

म् ॥ भविष्यज्ञानयोगाच्चकृतंरामायणंशुभम् ॥ १७ ॥ मृदङ्गपणवाद्यादियन्त्रवीणाविशारदौ ॥ वनेवनेचगायन्तौमृगपक्षिविमोहकौ ॥ १८ ॥ अद्भुतंगीतमाधुर्यंतवरामकुमारयोः ॥ श्रोतुंतौवरुणोबालावानिनायविभावरीम् ॥ १९ ॥ मनोहरवयोरूपौगानविद्याब्धिपारगौ ॥ कुमारौजगदुस्तत्रलोकेशादेशतःकलम् ॥ २० ॥ परमंमधुरंरम्यंपवित्रंचरितंतव ॥ शुश्रावववरुणःसार्धंकुटुम्बेनचगायकैः ॥ २१ ॥ शृण्वन्नैवागतस्तृप्तिंमित्रेणवरुणःसह ॥ सुधातोपिपरंस्वादुचरितंरघुनन्दन ॥ २२ ॥ गानानन्दमहालोभहृतप्राणेन्द्रियक्रियः ॥ प्रत्यागन्तुंदिदेशासौकुमारौनाहितावकौ ॥ २३ ॥ रमणीयमहाभोगैर्लोभितावपिबालकौ ॥ चालितौनगुरोश्चात्ममातुःपादाम्बुजस्मृतेः ॥ २४ ॥ अहंचापिगतःपश्चाद्वरुणालयमुत्तमम् ॥ वरुणःप्रेमसहितःपूजांचक्रेममप्रभो ॥ २५ ॥ पृच्छतेजन्मकर्मादिसर्वंज्ञायापिबालयोः ॥ वरुणायाब्रुवंसर्वंजन्मविद्याद्युपागमम् ॥ २६ ॥ श्रुत्वासीतासुतौदेवःसचक्रेम्बरभूषणैः ॥ देवदत्तमितिग्राह्यमितिमद्वाक्यगौरवात् ॥ २७ ॥ आहृतंराजपुत्राभ्यांयद्दत्तंवरुणेनतत् ॥

प्रसन्नेनतयोर्वाद्यगानविद्यावयोगुणैः ॥ ततोमामब्रवीत्सीतामुद्दिश्यवरुणःकृती ॥ २८ ॥
सीतापतिव्रताधुर्यारूपशीलवयोन्विता ॥ वीरपुत्रामहाभागात्यागंनार्हतिकर्हिचित् ॥
॥ २९ ॥ महतीहानिरेतस्यास्त्यागेहिरघुनन्दन ॥ सिद्धीनांपरमासिद्धिरेषातेत्यनपायिनी
॥ ३० ॥ पामरैर्महिमानास्याज्ञायतेयद्विदूषितैः ॥ काहानिस्तावताराम पुण्यश्रवणकीर्त
न ॥ ३१ ॥ अस्मत्साक्षिकमेतस्याःपावनंचरितंसदा ॥ सद्यस्तेसिद्धिमायान्तियेसीतापद
चिन्तकाः ॥ ३२ ॥ यस्याःसंकल्पमात्रेणजन्मस्थितिलयादिकाः ॥ भवन्तिजगतांनित्यं
व्यापाराऐश्वराअमी ॥ ३३ ॥ सीतामृत्युःसुधाचेयंतपत्येषाचवर्षति ॥ स्वर्गमोक्षस्तपो
योगोदानंचतवजानकी ॥ ३४ ॥ ब्रह्माणंशिवमन्यांश्चलोकपालान्मदादिकान् ॥ करो
त्येषाकरोत्येवनान्यासीतातवप्रिया ॥ ३५ ॥ त्वंपितासर्वलोकानांसीताचजननीत्य
तः ॥ कुदृष्टिरत्रतुक्षेमयोग्यानतवकर्हिचित् ॥ ३६ ॥ वेत्तिसीतांसदाशुद्धांसर्वज्ञोभगवा
न्स्वयम् ॥ भवानपिसुतांभूमेःप्राणादपिगरीयसीम् ॥ ३७ ॥ आदृतव्यात्वयातस्मात्प्रि

याशुद्धेतिजानकी ॥ नचशापपराभूतिःसीतायांत्वयिवाविभो ॥ ३८ ॥ इमानिममवाक्यानिवाच्यानिजगतांपतिम् ॥ रामंप्रतित्वयासाक्षाद्वाल्मीकेमुनिसत्तम ॥ ३९ ॥ इत्युक्तोवरुणेनाहंसीतासंग्रहकारणात् ॥ एवमेवहिसर्वैश्चलोकपालैरपिप्रभो ॥ ४० ॥ श्रुतंरामायणोद्गानंपुत्राभ्यांतेसुरासुरैः॥गन्धर्वैरपिसर्वैश्चकौतुकाविष्टमानसैः ॥४१॥ प्रसन्नाएवसर्वेपिप्रशशंसुःसुतौचते ॥ त्रैलोक्यंमोहितंताभ्यांरूपगानवयोगुणैः ॥ ४२ ॥ दत्तंयल्लोकपालैस्तुसुताभ्यांस्वीकृतंहितत् ॥ ऋषिभिश्चवराआभ्यामन्येभ्यःकीर्त्तिरेवच ॥ ४३ ॥ एकरामंजगत्सर्वंपूर्वंमुनिविलोकितम्॥ त्रिराममधुनाजातंसुताभ्यांतेखिलेक्षितम्॥४४॥ एककामपरामूर्तिर्लोकेपूर्वमवेक्षिता ॥ कामैश्चतुर्भिरद्यायंजायतेचयतस्ततः ॥ ४५ ॥ सर्वत्रान्यत्रराजेन्द्ररामपुत्रौकुशीलवौ ॥ गीयतेअत्रसंकोचःकिंकृतोविदुषित्वयि ॥ ४६ ॥ कृतेपुतनसर्वेषुश्रूयतेमहतीस्तुतिः॥त्यागादन्यत्रसीतायाःपुण्यश्लोकशिरोमणे ॥ ४७ ॥ त्वयात्रैलोक्यनाथेनगार्हस्थ्यमनुकुर्वता ॥ अङ्गीकार्यौसुतौरामविद्याशीलगुणान्वितौ ॥

॥ ४८ ॥ नतौस्त्वांमातरंहित्वास्थास्यतोभवदन्तिके ॥ जनन्यासहितौतस्मादाकार्यौभव
तासुतौ ॥ ४९ ॥ दत्तएवतयेदानींसेनासंजीवनात्पुनः ॥ प्रत्ययःसर्वलोकानांपावनःप
ततामपि ॥ ५० ॥ नाज्ञातंतेनचास्माकंनामराणांचमानद ॥ शुद्धौतस्यास्तुलोकानांय
न्नष्टंतदिहध्रुवम् ॥ ५१ ॥ ॥ शेषउ० ॥ इतिवाल्मीकिनारामःसर्वज्ञोप्यवबोधितः ॥ स्तुत्वान
त्वाचवाल्मीकिंप्रत्युवाचसलक्ष्मणम् ॥ ५२ ॥ गच्छताताधुनासीतामानेतुंधर्मचारिणीम् ॥
सपुत्रांरथमास्थायसुमन्त्रसहितःसखे ॥ ५३ ॥ श्रावयित्वाममेमानिमुनेश्चवचनान्यपि ॥
संबोध्यचपुरीमेतांसीतांप्रत्यानयाशुताम् ॥ ५४ ॥ लक्ष्मणउ० ॥ ॥ यास्यामितवसंदेशा
त्सर्वेषांनःप्रभोर्विभो ॥ देव्यायास्यतिचेद्देवयात्रामेसफलाततः ॥ ५५ ॥ मयिसासाभ्य
सूयैवपूर्वदोषवशात्सती ॥ अनागतायांतस्यांतुक्षमस्वागन्तुकंमम ॥ ५६ ॥ इत्युक्त्वा
लक्ष्मणोरामंरथेस्थित्वानृपाज्ञया ॥ सुमित्रमुनिशिष्याभ्यांयुतोगान्मुनिजाश्रमम् ॥ ५७ ॥
कथंप्रसादनीयास्यात्सीताभगवतीमया ॥ पूर्वदोषंविजानन्तीरामाधीनस्यमेसदा ॥ ५८ ॥

एवंसंचिन्तयन्नन्तर्हर्षसंकोचमध्यगः ॥ लक्ष्मणःप्राप्यसीतायाआश्रमंश्रमनाशनम् ॥
॥ ५९ ॥ रथात्सोथावरुह्याराद्श्रुरुद्धविलोचनः ॥ आर्येपूज्येभगवतिशुभेइतिवदन्मुहुः
॥ ६० ॥ पपातपादयोस्तस्यावेपमानाखिलाङ्गकः ॥ उत्थापितस्तयादेव्याप्रीतिविह्वल
यासच ॥ ६१ ॥ किमर्थमागतःसौम्यवनंमुनिजनप्रियम् ॥ आस्तेसकुशलीदेवःकौस
ल्याशुक्तिमौक्तिकः ॥ ६२ ॥ अशेषोमयिकश्चित्सकीर्त्याकेवलयादृतः ॥ कीर्त्यतेसर्वलो
केश्चकल्याणगुणसागरः ॥ ६३ ॥ अकीर्तिभीतिमापन्नस्त्यक्तुंमांत्वांनियुक्तवान् ॥ तत
श्चयदिलोकेषुकीर्तिस्तस्यामलाभवत् ॥ ६४ ॥ मृत्वापिपतिसत्कीर्तिंकुर्वन्त्यामेहिसुस्थि
रा ॥ पतिसामीप्यमेवाशुभूयादेवहिदेवर ॥ ६५ ॥ त्यक्तयापिमयातेननासौत्यक्तोमना
गपि ॥ फलंहिसाधनायत्तंहेतुःफलवशोनतु ॥ ६६ ॥ कौसल्याशल्यशून्यासौकृपापूर्णा
सदामयि ॥ आस्तेकुशलिनीयस्याःपुत्रस्त्रैलोक्यपालकः ॥ ६७ ॥ सर्वेकुशलिनःसन्तिभ
रताद्याश्चबान्धवाः ॥ सुमित्राचमहाभागायस्याःप्राणादहंप्रिया ॥ ६८ ॥ मद्वृत्तिंकित्वमपित्य

क्तः सर्वलोकेषु कीर्तये ॥ राज्ञः किंदुस्त्यजं तस्य स्वात्मापि यस्य न प्रियः ॥ ६९ ॥ इत्येवं ब
हुधा पृष्टस्तया रामानुजः सताम् ॥ उवाच कुशली देवः कुशलं त्वयि पृच्छति ॥ ७० ॥ कौस
ल्या च सुमित्रा च याश्चान्या राजयोषितः ॥ पप्रच्छुः कुशलं देवि प्रीत्या त्वामाशिषा सह ॥
॥ ७१ ॥ कुशलप्रश्नपूर्वं हि तव पादाभिवन्दनम् ॥ निवेदयामि शत्रुघ्नभरताभ्यां कृतं शुभे ॥
॥ ७२ ॥ गुरुभिर्गुरुपत्नीभिः सर्वाभिरपि ते शुभे ॥ दत्ताशीः कुशलप्रश्नः कृतश्च त्वयि जान
कि ॥ ७३ ॥ आकारयति देवस्त्वां निर्व्यलीकेन चात्मवान् ॥ अलभ्यान्यरतिस्त्वत्तोन्य
त्र सर्वत्र भामिनि ॥ ७४ ॥ शून्या एव दिशः सर्वास्त्वां विना जनकात्मजे ॥ पश्यन्रोदिति ना
थो नो रोदयन्नितरानपि ॥ ७५ ॥ यत्र देवि स्थितासि त्वं नित्यं स्मरति राघवः ॥ अशून्यं तु त
मेवासौ मन्यमानो विदेहजे ॥ ७६ ॥ धन्योयमाश्रमो जातो वाल्मीकेर्यत्र जानकी ॥ कालं
क्षिपति वार्ताभिर्मदीयाभिर्वदन्निति ॥ ७७ ॥ उक्तवान्यद्रुदन्किंचित्स्वामी नस्त्वयि तच्छृ
णु ॥ व्यक्तीभवति वक्तुर्यद्धृद्गतं तदसंशयम् ॥ ७८ ॥ लोका वदन्ति मामेव सर्वेषामीश्वरेश्व

रम् ॥ अहंत्वदृष्टमेवैषांस्वतन्त्रंकारणंब्रुवे ॥७९॥ अदृष्टमेवकार्येषुसर्वशोप्यनुगच्छति ॥
ईशनीयाःकुतोनैतद्वन्वीयुःसुखदुःखयोः ॥८०॥ धनुर्भङ्गेमतिभ्रंशेकैकेय्यामरणेपितुः ॥
अरण्यगमनेतत्रहरणेतववारिधेः ॥ ८१ ॥ तरणेरक्षसांभर्तुर्मारणेपिरणेरणे ॥ सहायीभव
नेमह्यमृक्षवानररक्षसाम् ॥ ८२ ॥ लाभेतवप्रतिज्ञायाःसत्यत्वेचसतीमणे ॥ पुनःस्वबन्धु
संबन्धेराज्यप्राप्तौचभामिनि ॥ ८३ ॥ पुनःप्रियावियोगेचकारणंयद्वारणम् ॥ प्रसीदति
तद्देवाद्यसंयोगेपुनरावयोः ॥ ८४ ॥ वेदोन्यथाकृतोयेनलोकोत्पत्तिलयौयतः ॥ लोको
न्नुगतस्तस्मात्कारणंप्रथमंत्वहम् ॥ ८५ ॥ अदृष्टमनुवर्तन्तेलोकाःसंप्रतिबोधकाः ॥ भो
गेनजीर्यतेदृष्टंतत्तन्नुक्तंत्वयावने ॥ ८६ ॥ स्नेहोकारणकःसीतेवर्धमानोममत्वयि ॥ लो
कादृष्टेतिरस्कृत्यत्वामाह्वयतआदरात् ॥८७॥ शङ्कितेनापिदोषेणस्नेहनैर्मल्यमज्जनम् ॥
भवतीतिसवैशुद्धआस्वाद्योविबुधैःसदा॥८८॥स्नेहशुद्धिरियंभद्रेकृतामेत्वयिनान्यथा॥म
न्तव्यंरक्षितोप्येषलोकःशिष्टानुवर्तिना ॥८९॥ आवयोर्निन्दयादेविसर्वावस्थासुशुद्धये॥

लोकोनश्येद्धिसंमूढश्चरितैर्महतामयम्॥ १०॥आवयोरुज्ज्वलाकीर्तिरावयोरुज्ज्वलोरसः
॥ आवयोरुज्ज्वलौवंशावावयोरुज्ज्वलाःक्रियाः ॥ ११ ॥ भवेयुरावयोःकीर्तिगायका
उज्ज्वलाभुवि ॥ आवयोर्भक्तिमन्तोयेतेयान्त्यन्तंभवाम्बुधेः॥ १२॥ इत्युक्ताभवतीतेनप्री
यमाणेनतेगुणैः ॥ पत्युःपादाम्बुजेद्रष्टुंकरोतुसदयंमनः॥ १३॥ वासांसिरमणीयानिभूषणा
निमहान्तिच ॥ अङ्गरागस्तथागन्धामनोज्ञास्त्वयियोजिताः ॥ १४ ॥ रथोदास्यश्चरामेण
प्रेषिताउत्सवायते ॥ छत्रंचचामरेशुभ्रेगजाअश्वाश्चशोभने ॥ १५ ॥ स्तूयमानाद्विजश्रे
ष्ठैःसूतमागधबन्दिभिः ॥ वन्द्यमानापुरस्त्रीभिःसेव्यमानाचयोद्धृभिः ॥ १६ ॥ पुष्पैःसंछा
द्यमानाचदेवीदेवाङ्गनादिभिः ॥ धनानिददतीतेभ्योद्विजातिभ्योयथेप्सितम् ॥ १७ ॥
गजारूढौकुमारौचपुरस्कृत्यजनेश्वरि ॥ मयानुगम्यमानाचगच्छायोध्यांनिजांपुरीम्
॥ १८ ॥ त्वयितत्रगतायांतुसंगतायांप्रियेणते ॥ सर्वासांराजनारीणामागतानांचसर्व
शः ॥ १९ ॥ सर्वासामृषिपत्नीनांकौसलानांतथैवच ॥ मङ्गलैर्वाद्यगीताद्यैर्भवत्वद्यमहो

त्सवः ॥ १०० ॥ ॥ शेषउवाच ॥ ॥ इतिविज्ञापनांदेवीश्रुत्वासीतातमाहसा ॥ नाहंकीर्त्ति करीराज्ञोत्ययकीर्तिःस्वयंत्वहम् ॥ १ ॥ किंमयातस्यसाध्यंस्याद्धर्मकामार्थशून्यया ॥ सत्येवंभवतांभूपेकोविश्वासोनिरङ्कुशे ॥ २ ॥ प्रत्यक्षावापरोक्षावाभर्तुर्दोषामनःस्थिताः ॥ नवाच्याजातुमादृश्याकल्याणकुलजातया ॥ ३ ॥ पाणिग्रहणकालेमेयद्रूपोहृदयेस्थितः ॥ तद्रूपोहृदयान्नासौकदाचिदपसर्पति ॥ ४ ॥ लक्ष्मणेमौकुमारौमेतत्तेजोंशसमुद्भवौ ॥ वंशाङ्कुरौमहाशूरौधनुर्विद्याविशारदौ ॥ ५ ॥ नीत्वापितुःसमीपंतुलालनीयौप्रयत्नतः ॥ तपसाराधयिष्यामिरामंकाममिहस्थिता ॥ ६ ॥ वाच्यंत्वयामहाभागपूज्यपादाभिवन्दनम् ॥ सर्वेभ्यःकुशलंचापिगत्वेतोमदुपेक्षया ॥ ७ ॥ पुत्रौसमादिशत्सीतागच्छतंपितुरन्तिकम् ॥ शुश्रूषणीयएवासौभवद्भ्यांस्वपदप्रदः ॥ ८ ॥ आज्ञप्तावप्यनिच्छन्तौतौकुमारौकुशीलवौ ॥ वाल्मीकिवचनात्तत्रजग्मतुश्चसलक्ष्मणौ ॥ ९ ॥ वाल्मीकेरेवपादान्जसमीपंतत्सुतौगतौ ॥ लक्ष्मणोपिववन्देतंगत्वाबालकसंयुतः ॥ ११० ॥ वाल्मीकिर्ल

क्ष्मणस्तौतुकुमारौमिलिताअमी ॥ सभायांसंस्थितंरामंज्ञात्वातेजग्मुरुत्सुकाः ॥ ११ ॥
लक्ष्मणःप्रणिपत्याथसीतावाक्यादिसर्वशः ॥ कथयामासरामायहर्षशोकयुतःसुधीः ॥
॥ १२ ॥ सीतासंदेशवाक्येभ्योरामोमूर्च्छांसमन्वभूत् ॥ संज्ञामवाप्यचोवाचलक्ष्मणंनय
कोविदम् ॥ १३ ॥ गच्छमित्रपुनस्तत्रयत्नेनमहताचताम् ॥ शीघ्रमानयभद्रंतेमद्वाक्यानिनि
वेद्यच ॥ १४ ॥ अरण्येकिंतपस्यन्त्यागतिरन्याविचिन्तिता ॥ श्रुताद्दृष्टाथवामत्तोयन्नाग
च्छसिजानकि ॥ १५ ॥ त्वदिच्छयात्वमेवेतोगतारण्यंमुनिप्रियम् ॥ पूजितामुनिपत्न्य
स्ताद्दृष्टामुनिगणास्त्वया ॥ १६ ॥ पूर्णोमनोरथस्तेद्यकिन्नागच्छसिभामिनि ॥ नदोषं
मयिपश्येस्त्वंस्वात्मेच्छयाविलोकनात् ॥ १७ ॥ गत्वागत्वाथवामोरुपतिरेवगतिःस्त्रि
याः ॥ निर्गुणोपिगुणाम्भोधिःकिंपुनर्मनसेप्सितः ॥ १८ ॥ यायाक्रियाकुलस्त्रीणांसासाप
त्युःप्रतुष्टये ॥ पूर्वमेवप्रतुष्टोहमिदानींसुतरांत्वयि ॥ १९ ॥ यागोजपस्तपोदानंव्रतंतीर्थं
दयादिकम् ॥ देवाश्चमयिसंतुष्टेतुष्टमेतदसंशयम् ॥ १२० ॥ ॥ शेषउवाच ॥ ॥ इतिसंदेश

मादायसीतांप्रतिजगत्पतेः ॥ आहलक्ष्मणआत्मेशमानंतःप्रणयाद्धरौ ॥ २१ ॥ सीता
नयनमुद्दिश्यप्रसन्नस्त्वंयदूचिवान् ॥ कथयिष्यामितद्वाक्यंविनयेनसमन्वितम् ॥ २२ ॥
इत्युक्त्वापादयोर्नत्वारघुनाथस्यलक्ष्मणः ॥ जगामत्वरितःसीतांरथेतिष्ठन्महाजवे ॥
॥ २३ ॥ वाल्मीकिःश्रीयुतौवीक्ष्यराजपुत्रौमहौजसौ ॥ उवाचस्मितमाधायमुखंकृत्वा
मनोहरम् ॥ २४ ॥ युवांप्रगायतांपुत्रौरामचारित्रमद्भुतम् ॥ वीणांप्रवादयन्तौचकलगा
नेनशोभितम् ॥ २५ ॥ इत्युक्तौतौसुतौरामचारित्रंबहुपुण्यदम् ॥ अगायतांमहाभागौसु
वाक्यपदचित्रितम् ॥ २६ ॥ यस्मिन्धर्मविधिःसाक्षात्पातिव्रत्यंतुयत्स्थितम् ॥ भ्रातृस्ने
होमयान्यत्रगुरुभक्तिस्तथैवच ॥ २७ ॥ स्वामिसेवकयोर्यत्रनीतिर्मूर्तिमतीकिल ॥ अध
र्मकरशास्तिवैयत्रसाक्षाद्रघूद्वहात् ॥ २८ ॥ तद्गानेनजगद्व्याप्तंदिविदेवाअपिस्थिताः ॥ कि
न्नराअपियद्गानंश्रुत्वामूर्च्छामिताःक्षणात् ॥ २९ ॥ वीणायारणितंश्रुत्वातालमानेनशो
भितम् ॥ निखिलापरिषत्तत्रशालभञ्जीवचित्रिता ॥ ३० ॥ हर्षादश्रूणिमुञ्चन्तोरामाद्याभू

मिपास्तथा ॥ तद्गानपञ्चमालापमोहिताश्चित्रितोपमाः ॥३१॥ तत्ररामःसुतौदृष्ट्वामहागान
विमोहकौ ॥ अदात्ताभ्यांसुवर्णस्यलक्षंलक्षंपृथक्पृथक् ॥ ३२ ॥ तदादानपरंदृष्ट्वावाल्मी
किंमुनिसत्तमम् ॥ अब्रूतांप्रहसन्तौतौकिंचिद्भ्रूकुभ्रुवौततः ॥ ३३ ॥ मुनेमहानयोनेनक्रियते
भूमिपेनवै ॥ यदावाभ्यांसुवर्णानिदातुमिच्छतिलोभयन् ॥ ३४ ॥ प्रतिग्रहोब्राह्मणा
नांशस्यतेनेतरेषुवै ॥ प्रतिग्रहपरोराजानरकायैवकल्पते ॥ ३५ ॥ आवयोःकृपयामुक्तं
राज्यंभुङ्क्तेमहीपतिः ॥ कथंदातुंसुवर्णानिवाञ्छतिश्रेयसान्वितः ॥ ३६ ॥ इत्युक्तवन्तौतौदृ
ष्ट्वावाल्मीकिःकृपयायुतः ॥ अशंसद्युष्मत्पितरंजानीथानीतिवित्तमौ ॥ ३७ ॥ इतिश्रुत्वा
मुनेर्वाक्यंबालकौनृपपादयोः ॥ लग्नौविनयसंयुक्तौमातृभक्त्यातिनिर्मलौ ॥ ३८ ॥ रामो
बालौदृढंस्वाङ्केपरिरभ्यमुदान्वितः ॥ मेनेस्त्रियास्तदाधर्मौमूर्तिमन्तावुपस्थितौ ॥ ३९ ॥ स
भापिरामसुतयोर्वीक्ष्यवक्त्रेमनोरमे ॥ जानकीपतिभक्तित्वंसत्यंमेनेमुनीश्वर ॥ १४० ॥
इतिशेषमुखप्रोक्तंश्रुत्वावात्स्यायनोब्रवीत् ॥ रामायणंश्रोतुमनाःसर्वधर्मसमन्वितम् ॥

॥ ४१ ॥ ॥ वात्स्यायनउवाच ॥ ॥ कस्मिन्कालेकृतंस्वामिन्रामायणमिदंमहत् ॥ कस्माच्चकारकिंतत्रवर्णनंतद्वदस्वमे ॥ ४२ ॥ ॥ शेषउवाच ॥ ॥ एकदागतवान्विप्रोवाल्मीकिर्विपिनंमहत् ॥ यत्रतालास्तमालाश्चकिंशुकायत्रपुष्पिताः ॥ ४३ ॥ केतकीयत्ररजसाकुर्वन्तिसौरभंवनम् ॥ शशिप्रभेवमहतीदृश्यतेशुभ्रवर्णभृत् ॥ चम्पकोबकुलश्चापिकोविदारःकुरण्टकः ॥ ४४ ॥ अनेकेपुष्पितायत्रपादपाःशोभनेवने ॥ कोकिलानांविरावेणषट्पदानांचशब्दितैः ॥ ४५ ॥ संघुष्टंसर्वतोरम्यंमनोहरवयोन्वितम् ॥ तत्रक्रौञ्चयुगंरम्यंकामबाणप्रपीडितम् ॥ ४६ ॥ परस्परंप्रहर्षितैरेमेस्निग्धतयास्थितम् ॥ तदाव्याधःसमागत्यतयोरेकंमनोहरम् ॥ ४७ ॥ अवधीन्निर्दयःकश्चिन्मांसास्वादनलोलुपः ॥ तदाक्रौञ्चीव्याधहतंस्वपतिंवीक्ष्यदुःखिता ॥ ४८ ॥ विललापभृशंदुःखान्मुञ्चन्तीरावमुच्चकैः ॥ तदामुनिःप्रकुपितोनिषादंक्रौञ्चघातकम् ॥ ४९ ॥ शशापवार्युपस्पृश्यसरितःपावनंशुभम् ॥ मानिषादप्रतिष्ठांत्वमगमःशाश्वतीःसमाः ॥ १५० ॥ यत्क्रौञ्चपक्षिणोरेकमवधीःकाममोहि

तम्॥ तदाप्रबन्धं श्लोकस्य जातं मत्वाह्यनुद्विजाः॥ ५१॥ ऊचुर्मुनिं प्रहृष्टास्ते शंसन्तः साधु साध्विति॥ स्वामिच्छापोदिते वाक्ये भारती श्लोकमातनोत्॥ ५२॥ अत्यन्तं मोहनो जातः श्लोकोयं मुनिसत्तम॥ तदा मुनिः प्रहृष्टात्मा बभूव वाडवर्षभ॥ तस्मिन्काले समागत्य ब्रह्मा पुत्रैः समन्वितः॥ ५३॥ वचो जगाद वाल्मीकिं धन्योसि त्वं मुनीश्वर॥ भारती त्वन्मुखे स्थित्वा श्लोकत्वं समपद्यत॥ ५४॥ तस्माद्रामायणं रम्यं कुरुष्व मधुराक्षरम्॥ येन ते विमला कीर्तिराकल्पान्तं भविष्यति॥ ५५॥ धन्या सैव मुखे वाणी रामनाम्ना समन्विता॥ अन्या कामकथा नॄणां जनयत्येव पातकम्॥ ५६॥ तस्मात्कुरुष्व रामस्य चरितं लोकविश्रुतम्॥ येन स्यात्पापिनां पापहानिरेव पदे पदे॥ ५७॥ इत्युक्त्वान्तर्दधे स्रष्टा सर्वदेवैः समन्वितः॥ ततः स चिन्तयामास कथं रामायणं भवेत्॥ ५८॥ तदा ध्यानपरो जातो नदीतीरे मनोरमे॥ तस्य चेतस्यथो रामः प्रादुर्भूतो मनोहरः॥ ५९॥ नीलोत्पलदलश्यामं रामं राजीवलोचनम्॥ निरीक्ष्य तस्य चरितं भूतं भव्यं भवच्चयत्॥ १६०॥ तदात्यन्तं मुदं प्राप्तो रामा

यणमथासृजत् ॥ मनोरमपदैर्युक्तंवृत्तैर्बहुविधैरपि ॥ ६१ ॥ षट्काण्डानिसुरम्याणियत्र रामायणेऽनघ ॥ बालमारण्यकंचान्यत्किष्किन्धासुन्दरंतथा ॥ ६२ ॥ युद्धमुत्तरमन्यच्चष डेतानिमहामते ॥ शृणुयाद्योनरःपुण्यात्सर्वपापैःप्रमुच्यते ॥ ६३ ॥ तत्रबालेतुसंतुष्टःपु त्रेष्ट्याचतुरःसुतान् ॥ प्रापपङ्क्तिरथःसाक्षाद्धरिंब्रह्मसनातनम् ॥ ६४ ॥ सकौशिकमखंग त्वासीतामुद्वाह्यभार्गवम् ॥ आगत्यपुरमुत्कृष्टोयौवराज्यप्रकल्पनम् ॥ ६५ ॥ मातृवाक्या द्वनंप्रागाद्गङ्गामुत्तीर्यपर्वतम् ॥ चित्रकूटंमहिलयालक्ष्मणेनसमन्वितः ॥ ६६ ॥ भरतस्तंव नेश्रुत्वाजगामभ्रातरंनयी ॥ तमप्राप्यस्वयंनन्दिग्रामेवासमचीकरत् ॥ ६७ ॥ बालमेतच्छृ णुष्वान्यदारण्यकसमुद्भवम् ॥ मुनीनामाश्रमेवासस्तत्रतत्रोपवर्णनम् ॥ ६८ ॥ नासा च्छेदःशूर्पणख्याःखरदूषणनाशनम् ॥ मायामारीचहननं दैत्याद्रामापहारणम् ॥ ६९ ॥ वने विरहिणाभ्रान्तंमनुष्यचरितंभृतम् ॥ कबन्धप्रेक्षणंतत्रपम्पायांगमनंतथा ॥ १७० ॥ हनूम तासंगमनमित्येतद्वनसंज्ञितम् ॥ अपरंचशृणुमुनेसंक्षिप्यकथयाम्यहम् ॥ १७१ ॥ स

नतालप्रभेदश्चवालेर्मारणमद्भुतम् ॥ सुग्रीवेराज्यदानंचनगवर्णनमित्युत ॥ ७२ ॥ लक्ष्म
णात्कर्मसंदेशःसुग्रीवस्यविवासनम् ॥ तथासैन्यसमुद्देशःसीतान्वेषणमप्युत ॥ ७३ ॥
संपातिप्रेक्षणंतत्रवारिधेर्लङ्घनंतथा ॥ परतीरेकपिप्राप्तिःकैष्किन्धंकाण्डमद्भुतम् ॥ ७४ ॥
सुन्दरंशृणुकाण्डंवैयत्ररामकथाद्भुता ॥ प्रतिगेहेपरिभ्रान्तिःकपेश्चित्रस्यदर्शनम् ॥ ७५ ॥ सी
तासंदर्शनंतत्रजानक्याभाषणंतथा ॥ वनभङ्गःप्रकुपितैर्बन्धनंवानरस्यच ॥ ७६ ॥ ततो
लङ्काप्रज्वलनंवानरैःसंगतिस्ततः ॥ रामाभिज्ञानदानंचसैन्यप्रस्थानमेवच ॥ ७७ ॥
समुद्रेसेतुकरणंशुकसारणसंगतिः ॥ इतिसुन्दरमाख्यातंयुद्धेसीतासमागमः ॥ ७८ ॥ उत्त
रेऋषिसंवादोयज्ञप्रारम्भएवच ॥ तत्रानेकारामकथाःशृण्वतांपापनाशकाः ॥ ७९ ॥ इति
षट्काण्डमाख्यातंब्रह्महत्यापनोदनम् ॥ संक्षेपतोमयातुभ्यमाख्यातंसुमनोहरम् ॥ १८० ॥
चतुर्विंशतिसाहस्रंषट्काण्डपरिचिह्नितम् ॥ तद्धैरामायणंप्रोक्तंमहापातकनाशनम् ॥ ८१ ॥
तच्छ्रुत्वाराघवःप्रीतःपुत्रावाघायचासने ॥ दृढंतौपरिरभ्याथसीतांसस्मारवल्लभाम् ॥ ८२ ॥

इतिश्रीप०पाताल०शेषवात्स्यायनसंवादेरामाश्वमेधेषट्षष्टितमोऽध्यायः ॥ ६६ ॥



॥शेषउवाच ॥ ॥ अथसौमित्रिरागत्यजानकींनतवान्मुहुः ॥ प्रेमगद्गदयाशंसन्रामचन्द्रप्रणोदितम् ॥ १ ॥सीतासमागतंदृष्ट्वालक्ष्मणंविनयान्वितम् ॥ तन्मुखाद्रामसंदेशंश्रुत्वोवाचविलज्जिता ॥ २ ॥ सौमित्रेकथमागच्छेरामत्यक्तामहावने ॥ तिष्ठामिरामंस्मरन्तीवाल्मीकेराश्रमेत्वहम् ॥ ३ ॥ तस्यामुखोदितंवाक्यंश्रुत्वासौमित्रिरब्रवीत् ॥ मातःपतिव्रतेरामस्त्वामाकारयतेमुहुः ॥ ४ ॥ पतिव्रतापतिकृतंदोषंनानयतेहृदि ॥ तस्मादागच्छहिमयास्थित्वास्यन्दनउत्तमे ॥ ५ ॥ इत्यादिवचनंश्रुत्वाजानकीपतिदेवता ॥ मनोरोषंपरित्यज्यतस्थौसौमित्रिणारथे ॥ ६ ॥ तापसीःसकलानत्वामुनींश्चनिगमोज्ज्वलान् ॥ रामंस्मरन्तीमनसारथेस्थित्वागमत्पुरीम् ॥ ७ ॥क्रमेणनगरींप्राप्तामहार्हाभरणान्विता ॥रामस्यपादयोर्लग्नापतिव्रतपरायणा ॥ ८ ॥ रामस्तामागतांदृष्ट्वाजानकींप्रेमविह्वलाम् ॥ साध्वित्वयासहेदानींकुर्वेयज्ञसमापनम् ॥ ९ ॥ वाल्मीकिंसानमस्कृत्यतथान्यान्विप्रसत्तमा

न् ॥ जगाममातृपद्योःसन्नतिंकर्तुमुत्सुका ॥ १० ॥ कौसल्यातामथायान्तींवीरसूंजा
नकींप्रियाम् ॥ आशीर्भिरभिसंयुज्ययौहर्षमनेकधा ॥ ११ ॥ कैकेयीपदयोर्नम्रांवीक्ष्य
वैदेहपुत्रिकाम् ॥ भर्त्रासहचिरंजीवसपुत्रेत्याशिषंव्यधात् ॥ १२ ॥ सुमित्रास्वपदेनम्रां
वीक्ष्यवैदेहपुत्रिकाम् ॥ आशिषंव्यदधात्तस्याःपुत्रपौत्रप्रदायिनीम् ॥ १३ ॥ सीताताः
सर्वतोनत्वाराममचन्द्रप्रियासती ॥ परमंहर्षमापन्नाबभूवकिलवाडव ॥ १४ ॥ समागतां
वीक्ष्यपत्नींरामचन्द्रस्यकुम्भजः ॥ सुवर्णपत्नींधिक्कृत्वातामधाद्धर्मचारिणीम् ॥ १५ ॥
रामस्तदायज्ञमध्येशुशुभेसीतयासह ॥ तारयानुगतोयद्वच्छशीवशरदुत्प्रभः ॥ १६ ॥ प्रयो
गमकरोत्तत्रकालेप्राप्तेमनोरमे ॥ वैदेह्याधर्मचारिण्यासर्वपापापनोदनम् ॥ १७ ॥ सीत
यासहितंरामंप्रयुक्तंयज्ञकर्मणि ॥ निरीक्ष्यजहृषुस्तत्रकौतुकेनसमन्विताः ॥ १८ ॥ व
सिष्ठंप्राहसुमतिंरामस्तत्रक्रतौवरे ॥ किंकर्तव्यंमयास्वामिन्नतःपरमवश्यकम् ॥ १९ ॥ राम
स्यवचनंश्रुत्वागुरुःप्राहमहामतिः ॥ ब्राह्मणानांप्रकर्तव्यापूजासंतोषकारिका ॥ २० ॥

मरुत्तेनक्रतुःसृष्टःपूर्वंसंभारसंभृतः ॥ ब्राह्मणास्तत्रवित्ताद्यैस्तोषिताअभवंस्तदा ॥ २१ ॥
अत्यन्तंवित्तसंभारंनेतुंविप्राशकन्नहि ॥ प्राक्षिपन्हिमवद्देशेवित्तभारासहाद्विजाः ॥ २२ ॥
तस्मात्त्वमपिराजाढ्यलक्ष्मीवान्नृपसत्तम ॥ देहिदानादिविप्रेभ्योयथास्यात्प्रीतिरुत्तमा ॥
॥ २३ ॥ एतच्छ्रुत्वासराजाढ्यःपूज्यंमत्वाघटोद्भवम् ॥ प्रथमंपूजयामासब्रह्मपुत्रंतपो
धनम् ॥२४॥ अनेकरत्नसंभारैःस्वर्णभारैरनेकधा ॥ देशैर्जनैःपरिवृतैरत्यन्तंप्रीतिदायकैः
॥ २५॥ अगस्त्यंपूजयामाससपत्नीकंमनोरमम्॥ तथैवरत्नैःस्वर्णैश्चदेशैश्चविविधैरपि ॥
॥ २६ ॥ व्यासंसत्यवतीपुत्रंतथैवसमपूजयत् ॥ च्यवनंभार्ययासाकंसुरत्नैःसमपूजय
त् ॥ २७ ॥ अन्यानपिमुनीन्सर्वानृत्विजस्तपसांनिधीन् ॥ पूजयामासरत्नौघैःस्वर्ण
भारैरनेकधा॥ २८ ॥ अदात्तदाक्रतौरामोविप्रेभ्योभूरिदक्षिणाम् ॥ लक्षंलक्षंसुवर्णस्यप्र
त्येकंत्वग्रजन्मने ॥ २९ ॥ दीनान्धकृपणेभ्यश्चददौदानमनेकधा ॥ यथासंतोषविहितैर्वि
त्तैरत्नैर्मनोहरैः ॥ ३० ॥ वासांसिचविचित्राणिभोजनानिमृदूनिच ॥ तत्रप्रादाद्यथाशा

स्त्रंसर्वेषांप्रीतिदायकम् ॥ ३१ ॥ हृष्टपुष्टजनाकीर्णंसर्वसत्त्वोपबृंहितम् ॥ अत्यन्तमभव
द्धृष्टंपुरंपुंस्त्रीसमावृतम् ॥ ३२ ॥ दानंददन्तंसर्वेषांवीक्ष्यकुम्भोद्भवोमुनिः ॥ अत्यन्तपरम
प्रीतिंययौक्रतुवरेद्विजः ॥ ३३ ॥ तदाभिषेकस्नानार्थंपानीयममृतोपमम् ॥ आनेतुंच
चतुःषष्टिनृपान्सर्वान्समाह्वयत् ॥ ३४ ॥ रामस्तुसीतयासार्धमानेतुमुदकंययौ ॥ घ
टेनस्वर्णवर्णेनसर्वालंकारशोभया ॥ ३५ ॥ सौमित्रिरप्यूर्मिलयामाण्डव्याभरतोनृपः ॥
शत्रुघ्नःश्रुतकीर्त्याचकान्तिमत्याचपुष्कलः ॥ ३६ ॥ सुबाहुःसत्यवत्याचसत्यवान्वी
रभूषया ॥ सुमदस्तत्रसत्कीर्त्याराज्ञ्याचविमलोनृपः ॥ ३७ ॥ राजावीरमणिस्तत्रश्रु
तवत्यामनोज्ञया ॥ लक्ष्मीनिधिःकोमलयारिपुतापोङ्गसेनया ॥ ३८ ॥ विभीषणोम
हामूर्त्याप्रतापाग्र्यःप्रतीतया ॥ उग्राश्वःकामगमयानीलरत्नोधिरम्यया ॥ ३९ ॥ सुरथः
सुमनोहार्यातथामोहनयाकपिः ॥ इत्यादीन्नृपतीन्विप्रोवसिष्ठःप्राहिणोन्मुनिः ॥ ४० ॥
वसिष्ठःसरयूंगत्वाशिवपुण्यजलाप्लुताम् ॥ उदकंमन्त्रयामासवेदमन्त्रेणमन्त्रवित् ॥ ४१ ॥

पयःपुनीह्यमुंवाहमुदकेनमनोहृता ॥ यज्ञार्थंरामचन्द्रस्यसर्वलोकैकरक्षितुः ॥ ४२ ॥
उदकंतन्मुनिस्पृष्टंसर्वैरामादयोनृपाः ॥ आजह्रुर्मण्डपतलेविप्रवर्यैरुपस्तुते ॥ ४३ ॥ पयो
भिर्निर्मलैःस्नाप्यवाजिनंक्षीरसन्निभम् ॥ मन्त्रेणमन्त्रयामासरामहस्तेनकुम्भजः॥४४॥
पुनीहिमांमहाबाहोअस्मिन्ब्रह्मसमाकुले ॥ तन्मेधेनाखिलादेवाःप्रीणन्तुपरितोषिताः॥
॥ ४५ ॥ इत्युक्त्वासनृपोरामःसीतयासममस्पृशत् ॥ तदासर्वेद्विजाश्चित्रममन्यन्तकुतूह
लात् ॥ ४६ ॥ परस्परमवोचंस्तेयन्नामस्मरणान्नराः ॥ महापापात्प्रमुच्यन्तेसरामःकिंव
दत्यहो ॥४७॥ इत्युक्तवतिभूमीशेरामेकुम्भोद्भवोमुनिः ॥ करवालंचाभिमन्त्र्यददौरामक
रेमुनिः ॥ ४८ ॥ करवालेधृतेस्पृष्टेरामेणसहयःक्रतौ ॥ पशुत्वंतुविहायाशुदिव्यरूपम
पद्यत ॥४९॥ विमानवरमारूढश्चाप्सरोभिःसमन्ततः ॥ चामरैर्वीज्यमानश्चवैजयन्त्यावि
भूषितः ॥ ५० ॥ तदातंवाजितांत्यक्त्वादिव्यरूपधरंवरम् ॥ वीक्ष्यलोकाःक्रतौसर्वेविस्म
यंप्राप्नुवंस्तदा ॥५१॥ तदारामःस्वयंजानञ्ज्ञापयन्सर्वतोनरान् ॥ पप्रच्छदिव्यरूपंतं

सुरंपरमधार्मिकः ॥ ५२ ॥ कस्त्वंदिव्यवपुःप्राप्तःकस्मात्त्वंवाजितांगतः ॥ कथंसुरस्त्रीस
हितःकिंचिकीर्षसितद्वद ॥ ५३ ॥ रामस्यवचनंश्रुत्वादेवःप्रोवाचभूमिपम् ॥ हसन्मेघर
वांवाणीमवदत्सुमनोहराम् ॥ ५४ ॥ तवाज्ञातंनसर्वत्रबाह्याभ्यन्तरचारिणः ॥ तथापिपृ
च्छतेतुभ्यंकथयामियथातथम् ॥ ५५ ॥ अहंपुराभवंशमद्विजःपरमधार्मिकः ॥ अचरं
प्रतिकूलंवैवेदस्यरिपुतापन ॥ ५६ ॥ कदाचिद्धूतपापायास्तीरेहंगतवान्पुरा ॥ अनेकवृ
क्षललितेसर्वत्रसुमनोरमे ॥ ५७ ॥ तत्रस्नात्वापितॄन्तृप्त्वादानंदत्त्वायथाविधि ॥ ध्यानंत
वमहाबाहोकृतवान्वेदसंमितम् ॥ ५८ ॥ तदाजनाःसमायाताबहवस्तत्रभूपते ॥ तेषां
प्रवञ्चनार्थायदम्भमेनमकारिषम् ॥ ५९ ॥ अनेकक्रतुसंभारैःपूर्णमजिरमुत्तमम् ॥ वासोभि
श्छादितंरम्यंचषालाद्युतंमहत् ॥ ६० ॥ अग्निहोत्रोद्भवोधूमःसर्वतोनभसोङ्गणम् ॥ च
काररम्यमतुलंचित्रकारिवपुर्धरः ॥ ६१ ॥ अनेकतिलकश्रीभिःशोभिताङ्गोमहत्तपाः ॥ दर्भ
शोभःसमित्पाणिर्दम्भोमूर्तिधरःकिमु ॥ ६२ ॥ दुर्वासास्तत्रस्वच्छन्दंपर्यटन्जगतीतलम् ॥

प्रापतत्रमहातेजाधूतपापःसरित्तटे ॥ ६३ ॥ ददर्शमांदम्भकरंमौनधारिणमग्रतः ॥ अनर्घ्यं
करमुन्मत्तमास्वागतवचःकरम् ॥ ६४ ॥ दृष्ट्वातीवक्रुधाक्रान्तःसमुद्रइवपर्वणि ॥ शशापा
सौमुनिस्तीव्रंदम्भिनंमांमहामतिः॥६५॥दम्भंकरोषिचेत्तीरेसरितस्त्वंसुदुर्मते ॥ तस्मात्प्रा
प्नुहिनिर्वाच्यंपशुत्वंतापसाधम ॥ ६६ ॥ शापंप्रदत्तंसंश्रुत्यदुःखितोहंतदाभवम् ॥ अग्रा
हिषंपदेतस्यमुनेर्दुर्वाससःकिल ॥ ६७ ॥ तदामेकृतवान्नामद्विजोनुग्रहमुत्तमम् ॥ वाजि
तांप्राप्नुहिमखेराजराजस्यतापस ॥ ६८ ॥ पश्चात्तद्धस्तसंपर्कात्प्राप्याहितत्परमंपदम् ॥ दि
व्यंवपुर्मनोहारिधृत्वादम्भविवर्जितम् ॥६९॥ तेनशापोपिसंदिष्टोममानुग्रहतांगतः ॥ यदहं
तवहस्तस्यस्पर्शंप्राप्तोमनोरमम् ॥ ७० ॥ यदेवरामदेवादिदुर्लभंबहुजन्मभिः ॥ तत्तेहंकर
जस्पर्शंप्राप्तवानिहदुर्लभम् ॥ ७१ ॥ आज्ञापयमहाराजत्वत्प्रसादादहंमहत् ॥ गच्छामि
शाश्वतंस्थानंतवदुःखादिवर्जितम् ॥ ७२ ॥ नयत्रशोकोनजरानमृत्युःकालविभ्रमः ॥ त
त्स्थानंक्वगच्छामित्वत्प्रसादान्नराधिप ॥ ७३ ॥ इत्युक्त्वातंपरिक्रम्यविमानवरमारुहत्॥

अनेकरत्नखचितंसर्वदेवाधिवन्दितम् ॥ ७४ ॥ गतोसौशाश्वतस्थानंरामपादप्रसादतः ॥
पुनरावृत्तिरहितंशोकमोहविवर्जितम् ॥७५॥ तेनतत्कथितंश्रुत्वारामंज्ञात्वेतरेजनाः ॥ वि
स्मयंप्रापिरेसर्वेपरस्परमुदुन्मदाः ॥७६॥ शृणुद्विजमहाबुद्धेदम्भेनापिस्मृतोहरिः ॥ ददाति
मोक्षंसुतरांकिंपुनर्दम्भवर्जनात् ॥७७॥ यथाकथंचिद्रामस्यकर्तव्यंस्मरणंपरम् ॥ येनप्रा
प्नोतिपरमंपदंदेवादिदुर्लभम् ॥ ७८ ॥ तच्चित्रंवीक्ष्यमुनयःकृतार्थंमेनिरेनिजम् ॥ यद्राम
चरणप्रेक्षाकरस्पर्शपवित्रितम् ॥ ७९ ॥ गतेतस्मिन्सुरेस्वर्गंहयरूपधरेपुरा ॥ उवाचराम
स्तपसांनिधीन्वेदविदुत्तमः ॥ ८० ॥ किंकर्तव्यंमयाब्रह्मन्हयोनष्टोगतःसुखम् ॥ होमः
कथंपुरोभावीसर्वदैवततर्पकः ॥ ८१ ॥ यथास्यात्सुरसंतृप्तिर्यथामेमखउत्तमः ॥ तथाकुर्व
न्तुमुनयोयथामेस्याद्विधिश्रुतम् ॥ ८२ ॥ इतिवाक्यंसमाश्रुत्यजगादमुनिसत्तमः ॥
वसिष्ठःसर्वदेवानांचित्ताभिज्ञानकोविदः ॥ ८३ ॥ कर्पूरमाहरंक्षिप्रंयेनदेवाःस्वयंपुरा ॥
प्राप्यहव्यंग्रहीष्यन्तिमद्वाक्यप्रेरिताधुना ॥ ८४ ॥ इतिवाक्यंसमाकर्ण्यरामःक्षिप्रमुपा

हरत् ॥ कर्पूरंबहुदेवानांप्रीत्यर्थंबहुशोभनम् ॥ ८५ ॥ तदामुनिःप्रहृष्टात्मादेवानाह्वयदच्यु
तान् ॥ तेसर्वेतत्क्षणात्प्राप्ताःस्वपरीवारसंवृताः ॥ ८६ ॥ इतिश्रीपद्मपुराणेपातालखण्डे
शेषवात्स्यायनसंवादेशमाश्वमेधेसप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥*॥ ॥*॥
॥ शेषउवाच ॥ ॥ इन्द्रस्तत्रहविर्मृष्टंरामचन्द्रेणवीक्षितम् ॥ परिस्वादन्कृतोतृप्तिंनप्राप
सुरसंयुतः ॥ १ ॥ नारायणोमहादेवोब्रह्मातत्रचतुर्मुखः ॥ वरुणश्चकुबेरश्चतथान्येलो
कपालकाः ॥२॥ तत्रास्वाद्यहविःस्निग्धंवसिष्ठेनपरिष्कृतम् ॥ ततृपुर्नहिविप्रेन्द्राःक्षुधार्ताइ
वभोजनात् ॥ ३ ॥ सर्वान्देवांश्चसंतर्प्यहविषाकरुणानिधिः ॥ वसिष्ठःप्रेरितःसर्वमिति
कर्तव्यमाचरत् ॥ ४ ॥ ब्राह्मणादानसंतुष्टाहविस्तुष्टाःसुरावराः ॥ तृप्ताःसर्वेस्वकंभागंगृ
हीत्वास्वालयंययुः ॥५॥ ऋषिभ्योहोतृमुख्येभ्यःप्रादाद्राज्यंचतुर्दिशम् ॥ संतुष्टास्तेद्वि
जारामममाशीर्भिरददुःशुभम् ॥ ६ ॥ पूर्णाहुतिंततःकृत्वावसिष्ठःप्राहसुस्त्रियः ॥ वर्धापयन्तु
भूमीशंयागपूर्तिकरंपरम् ॥ ७ ॥ तद्वाक्यंताःस्त्रियःश्रुत्वालाजैरवकिरन्मुदा ॥ लावण्य

जितकन्दर्पंमहामणिविभूषितम् ॥ ८ ॥ ततोवभृथस्नानार्थंप्रेरयामासभूमिपम् ॥ ययौरा
मःसहस्त्रीयैःसरयूतीरमुत्तमम् ॥ ९ ॥ अनेकराजकोटीभिःपरीतःपादचारिभिः ॥
जगामससरिच्छ्रेष्ठांपक्षिवृन्दसमाकुलाम् ॥ १० ॥ तारापतिरिवस्वाभिर्भार्याभिर्वृतउ
त्प्रभः ॥ विरोचतेतथातद्वद्रामोराजगणैर्वृतः ॥ ११ ॥ तदुत्सवंसमाज्ञायययुर्लोकास्त्वरा
युताः॥सीतापतिमुखालोकनिश्चलीभूतलोचनाः॥१२॥राजेन्द्रंसीतयासाकंगच्छन्तंस
रितंप्रति ॥ विलोक्यमुदितालोकाश्चिरंदर्शनलालसाः॥ १३॥ अनेकनटगन्धर्वागायन्तो
यशउज्ज्वलम् ॥ अनुजग्मुर्महीशानंसर्वलोकनमस्कृतम् ॥ १४ ॥ नर्तकयस्तत्रनृत्यन्त्यः
क्षोभयन्त्यःपतेर्मनः ॥ जलयन्त्रैश्चसिञ्चन्त्योययुःश्रीरामसेवनम् ॥ १५ ॥ महाराजंविले
पन्त्योहरिद्रा[illegible]मादिभिः ॥परस्परंप्रलिम्पन्त्योमुदंप्रापुर्महत्तराम॥ १६ ॥ कुचयुग्मोपरि
न्यस्तमुक्त[illegible]शोभिताः॥ श्रवणद्वन्द्वसंमृष्टस्वर्णकुण्डललक्षिताः॥ १७॥ अनेकनरना
रीभिःसं[illegible]माचरन् ॥ यथावत्सरितंप्रापशिवपुण्यजलाप्लुताम् ॥ १८ ॥ [illegible]

सर्वैदेत्य। ललोचनः ॥ प्रविवेशजलंपुण्यंवसिष्ठादिभिरन्वितः ॥ १९ ॥ यदन्तु
विविशुःसहदेवानभोजनतास्तथा ॥ तत्पादरजसापूतजलंलोकैकवन्दितम् ॥ २० ॥ परस्प
रंप्रासिञ्चन्तोक्षणयन्त्रैर्मनोरमैः ॥ सुशोणनयनाःसर्वेहर्षंप्रापुर्मनोधिकम् ॥ २१ ॥ सरामः
सीतयासार्धंचिरंपुण्यजलप्लवे ॥ क्रीडित्वाजलकल्लोलैर्निरगाद्धर्मसंयुतः ॥ २२ ॥ दुकूल
वासाःसकिरीटकुण्डलःकेयूरशोभावरकङ्कणान्वितः ॥ कन्दर्पकोटिश्रियमुद्वहन्नृपोराजा
श्यसर्वैरुपसंस्तुतोबभौ ॥ २३ ॥ सयागयूपंवरवर्णशोभितंकृत्वासरित्तीरवरेमहामनाः ॥
त्रैलोक्यलोकाश्रियमापचाद्भुतामन्यैर्दुरापांनृपतिर्भुजैर्निजैः ॥ २४ ॥ एवंजनकपुत्र्यासौ
हयमेधत्रयंचरन् ॥ त्रैलोक्येकीर्तिमतुलांप्रपेदेवैसुदुर्लभाम् ॥ २५ ॥ एवंतेवर्णितंतात्य
त्पृष्टोरामसत्कथाम् ॥ विस्तृतःकथितोमेघोभूयःकिंपृच्छसेद्विज ॥ २६ ॥ यःशृणोतिहरे
र्भक्त्यारामचन्द्रस्यसन्मखम् ॥ ब्रह्महत्यांक्षणात्तीर्त्वाब्रह्मशाश्वतमाप्नुयात् ॥ २७ ॥ अपु
त्रोलभतेपुत्रान्निर्धनोधनमाप्नुयात् ॥ रोगार्तोमुच्यतेरोगाद्बद्धोमुच्येतबन्धनात् ॥ २८ ॥

यत्कथाश्रवणाद्दुष्टः श्वपचोपिपरंपदम् ॥ प्राप्नोतिकिमुविप्राद्योरामभक्तिपरायणः ॥
॥ २९ ॥ रामंस्मृत्वामहाभागंपापिनःपरमंपदम् ॥ प्राप्नुयुःपरमंस्वर्गंशक्रदेवादिदुर्लभम् ॥
॥ ३० ॥ तेधन्यामानवालोकेयेस्मरन्तिरघूत्तमम् ॥ तेक्षणात्संसृतिंतीर्त्वागच्छन्तिसुखम
व्ययम् ॥ ३१ ॥ प्रत्येकमक्षरंब्रह्महत्यावंशदवानलः ॥ तंयःश्रावयतेधीमांस्तंगुरुंसंप्रपूज
येत् ॥ ३२ ॥ श्रुत्वाकथांवाचकायगवांद्वन्द्वंप्रदापयेत् ॥ सपत्नीकायसंपूज्यवस्त्रालंकार
भोजनैः ॥ ३३ ॥ कुण्डलाभ्यांविराजन्त्यौमुद्रिकाभिरलंकृते ॥ रामसीतेस्वर्णमय्यौप्रति
मेशोभनेवरे ॥ ३४ ॥ कृत्वातुवाचकायैवदीयतेभोद्विजोत्तम ॥ तस्यदेवाश्चपितरोवैकुण्ठं
प्ययर ॥ ३५ ॥ त्वयापृष्टारामकथामयातेकथितापुरा ॥ किमन्यत्कथ्यतां
॥ ३६ ॥ शृण्वन्तियेकथामेतांब्रह्महत्यौघनाशिनीम् ॥ तेयान्तिपर
नम् ॥ ३७ ॥ गोघ्नश्चापिसुतघ्नश्चसुरापोगुरुतल्पगः ॥ क्षणात्पन
क्षमम ॥ ३८ ॥ ॥ इतिश्रीपद्मपुराणेपातालखण्डेशे

और ... श्रीविष्णुसहस्रनाम
... भेजा जायगा. इसका ...

॥२१३॥

सर्वैदेद्य। लणपठनपुण्यवर्णनंनामाष्टषष्टितमोध्यायः ॥ ६८ ॥ ०॰ययदन्तु अ॰

विविशुःसहुदेवानमोऽणमस्तु ॥ ॥ इतिरामाश्वमेधःसमाप्तः ॥ ॥ ६८

रंप्रासिञ्चन्तोक्षणुयन् केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् ॥

... ासाधीञ्ज्ञिशंर माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे॥ १ ॥

(द्वितीयावृत्तिरियम्)

श्रीयुक्तः श्रीकृष्णदासात्मजो यो गङ्गाविष्णुः सर्वदिक्षु प्रसिद्धः ॥ कल्याणाख्ये-मोहमय्यां च तेन नैजे लक्ष्मीवेङ्कटेशाख्ययन्त्रे ॥ १ ॥
षट्काश्यप्यष्टेन्दु (१८१६) शाके तथा भ्विष्वङ्काब्जेब्दे (१९५१) वैक्रमे भाद्रमासे ॥ अन्ते चैतत्पुस्तकं मुद्रयित्वा शास्त्रज्ञैः सं-शोध्य पूर्णं कृतं हि ॥ २ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास, लक्ष्मीवेङ्कटेश्वर छापाखाना

कल्याण-मुंबई.



॥२१२॥

